श्रीश्रीगुरुगौराङ्गौ जयतः ।

# श्रीचैतन्यलीलामृतसारः

श्रीचैतन्यभागवत-श्रीचैतन्यचरितामृताख्य-प्राचीन-प्रामाणिक
ग्रन्थद्वयस्यानुसरणेन

गौडीय संप्रदायैक संरक्षक
ओं विष्णुपाद
परमहंस परिव्राजकाचार्यवर्याष्टोत्तरशतश्री
श्रीमद्भक्तिसिद्धान्तसरस्वतीगोस्वामि प्रभुचरणानां
कृपानिदेशेन

तदाश्रित-तदनुगवरेण
महामहोपदेशकेन
**श्रीमदनन्तवासुदेव विद्याभूषणेन**
प्रणीतः



मद्रनगरे रायपेट्टस्थित
श्रीगौडीयमठतः
तदीय किंकराभासेन
त्रिदण्डिभिक्षुणा श्रीभक्तिरक्षक श्रीधरेण संकलितः प्रकाशितश्च

गौराब्द ४४९

प्रथमावृत्तिः]

[भैक्ष्यमर्धरौप्यकम्

श्रीश्रीगुरुगौराङ्गौ जयतः ।

# श्रीचैतन्यलीलामृतसारः ।

"नवद्वीपे शचीगर्भशुद्धदुग्धाम्बुधेर्मुदा ।
पूर्णेन्दुरुदयं लेभे गौराङ्गो नन्दनन्दनः ॥"

इति कविभूपतिश्रीमत्कृष्णदासप्रणीतश्रीचैतन्यचरितामृत-वचनम् । तथा—

"मायापुरमिति क्षेत्रं नवद्वीपाख्यमण्डले ।
श्रीगौरो भगवान् यत्र जज्ञे महाप्रभुः स्वयम् ॥
बृन्दावने यथा योगपीठः सर्वमनोरमः ।
नवद्वीपे तथा मायापुरं तदात्मकं मतम् ॥"

इति भक्तिरत्नाकरवाक्यं च ।

एवं श्रीचैतन्यभागवत-श्रीचैतन्यचन्द्रोदय-श्रीचैतन्य-चरितप्रमुखप्रमाणप्रवरप्रबन्धनिकरप्रख्यातमाहात्म्यं तदानीं-तनभारतवर्षस्य गीर्वाणवाणीविलासलास्यतरङ्गरङ्गाकुलरङ्ग-

भवनं वेदवेदाङ्गस्मृतितर्कतन्त्राद्यशेषशास्त्रगहनचङ्क्रमण-सुनिपुणधिषणैर्धिक्कृतधिषणैरखण्डप्रचण्डपा ण्डि त्य म ण्ड न-सम्मण्डितैरवनिमण्डलमण्डनायमानैः पण्डितकुलैरनवरतशास्त्र-विचारणपरायणैर्मुखरितदिगन्तरालं मधुकरनिकैररिव गुण-सौरभापह्रियमाणमानसैरशेषदेशदेशान्तरसमागतैर्विद्यार्थिकुलैः कमलमिव संसेव्यमानमप्राकृतरसपञ्चकसंसेवनप्रचारपरसु-मधुरसाहित्यरसालशिखरसमारूढैः कोमलकान्तकलपदकीर्तन-नन्दितविश्वमण्डलैर्जयदेवप्रमुखैर्नन्दनन्दनसुन्दरपदारवि न्द-द्वन्द्ववन्दनानिरतैर्भक्तकोकिलबृन्दैरध्यास्यमानामन्दकविताकुञ्जं निखिलराजगुणविभूषणानां प्रबलप्रतापानां सेनवंशीय-नरपतीनां राजधानीभूतं पश्चिमतः सुरतरङ्गिणीतरङ्ग-मालाभिर्विधौतपादमूलमगण्यपण्यराजिविराजितविपणिसहस्र-समावेशोपहसितराजराजपुरं धरणीसुरप्रमुखनानाजातिजन-गणसङ्कुलं सुप्राचीनं श्रीनवद्वीपमायापुरनगरं भागीरथी-प्रवाहस्य पूर्वतीरे विराजमानमासीत् । किं च, तदानीं तस्य समन्तात् संस्थापितान्यपि विद्याविलासक्षेत्राणि तत्रात्रैवावर्तन्त । तथा हि श्रीनवद्वीपपरिक्रमाख्यग्रन्थे श्रीमन्नरहरिचक्रवर्तिठक्कुरचरणभाषितम्—

"नवभिर्मिलितैर्द्वीपैर्नवद्वीपमिति स्मृतम् ।
द्वीपानां तत्र भेदेऽपि ग्रामत्वेनैकमेव तत् ॥

राजधानी यथा काचिद्विभिन्नस्थानसंयुता ।
नाम्नैकेनैव संख्याता तथात्रापि भवेन्मतम् ॥"

निखिलजगद्यन्त्रनियन्त्रिणः सर्वतन्त्रस्वतन्त्रस्य भगवतः कालचक्रप्रभावेण साम्प्रतं प्राप्तविपर्यासस्यापि क्षेत्रस्यास्य वल्लालसेननरपतेः प्रासादभग्नावशेषस्तथा पारावारकल्पवल्लालदीर्घिका च सेनवंशीयानां राजधानीत्वे प्रत्यक्षमेव प्रमाणं सर्वसंवादितं समालक्ष्यते । मल्लदहप्रदेशस्थप्राचीनगौडनगरादेतैरेव समानीतं राजसिंहासनमत्र प्रतिष्ठापितमिति तदानीमेतन्नवद्वीपमण्डलं गौडभूमित्वेनापि प्रख्यातिमलभत । दुरत्ययदैवगत्या च यवनस्वर्भानुकबलमासादिते तेषां सौभाग्यभानौ पञ्चदशशताब्दे वङ्गीयस्वाधीनभूपतेरल्लावुद्दीनसैयद्‌हुसेन साहस्य निदेशतः प्राड्विवाकप्रवरः फौजदार मौलाना सिराजुद्दीन चांदकाजीमहोदयोऽपीहैव व्यवहारासनमलंचकार । साम्प्रतमपि तस्य पुण्यतमं समाधिक्षेत्रं वंशावतंसाश्च प्राचीनबिल्वपुष्करिणीपल्या अंशभूते

अधुना ब्राह्मणपुष्करिणीति विदितपल्लीविशेषे विराजमाना नानादेशसंप्राप्तानां पथिकजनानां स्मृतिपद्धतौ लुप्तमपि यवनराजगौरवं प्रत्यक्षमिव संस्थापयन्ति । तत्र खलु भागीरथीपुण्यप्रवाहपरिवेष्टितं षोडशक्रोशपरिमितपरिधिपरिगतं नवविधभक्तिपीठात्मकान्तः सीमन्त गोद्रुम मध्य कोलऋतुजह्नुमोदद्रुमरुद्राभिधानद्वीपनवकविराजमानान्तरं भूमण्डलमेव श्रीनवद्वीपधामनाम्नाभिहितं भवति ॥

तत्रैवाष्टदलकमलस्य गर्भकोषोपमे द्वीपाष्टकान्तर्वर्तिन्यन्तर्द्वीपे श्रीपुरुषोत्तमक्षेत्रमिव श्रीमज्जगन्नाथाधिष्ठानम्, कैलासभवनमिव श्रीचन्द्रशेखरसमाश्रितम्, कमलवनमिव श्रीवासविमण्डितम्, श्रीमद्भगवद्गीताशास्त्रमिव सार्वभौमवासुदेवप्रभावोद्भासितम्, वैशेषिकदर्शनमिवाभावविमण्डितम्, न्यायशास्त्रमिव निःश्रेयसाधिगमकारणम्, सांख्यशास्त्रमिव पुरुषप्रकाशकम्, योगसूत्रमिव परमात्मसाक्षात्कारनिदानम्, मीमांसाशास्त्रमिवापूर्वसंपदाश्रयम्, व्याकरणशास्त्रमिव विविधधातुविभक्तिप्रत्ययसाधनक्षेत्रम्, काव्यशास्त्रमिव सुरसात्मकम्, आयुर्वेदशास्त्रमिव प्रख्यापितरसायनतत्त्वम्, कुरुसमराङ्गणमिव विश्वरूपातीतस्वकीयश्री-

रूपप्रकाशनम्, नागराजभोगमण्डलमिव विश्वम्भराश्रितम्, इन्द्रभवनमिव पौलोमीसंचारणसमधिगतलक्ष्मीकम्, दण्डकारण्यमिव रघुनाथविचरणक्षेत्रम्, पयोदमण्डलमिव विष्णुपदभूषणम्, गोपेश्वरसदाशिवाधिष्ठितभूतलमच्छेद्यमाथुरमण्डलं मधुपुर्यभिन्नम् श्रीमद्भागवतमिवामलपारमहंस्यसंसेव्याद्वयज्ञानप्रचारं संराजते श्रीमायापुराभिधानं परमपूतमप्राकृतं श्रीधामप्रवरम् ॥

पुरा किल श्रीहट्टप्रदेशवासिनो वैदिकभूसुरवरस्य श्रीमदुपेन्द्रमिश्रमहोदयस्य तनयसप्तकान्यतमः श्रीमज्जगन्नाथमिश्रमहोदयः पुण्यसलिलभागीरथीतीर्थनिवासाय श्रीमन्नवद्वीपधामप्रवरं समागत्य नवद्वीपान्तर्गतविल्वपुष्करिणीपल्लीवास्तव्यस्य ज्योतिर्विज्ञानपारङ्गतस्य श्रीमन्नीलाम्बरचक्रवर्तिमहोदयस्य श्रीशचीदेवीं नाम दुहितरमखिलनारीगुणगणविभूषणां परिणीय श्रीधाममायापुरं निजवासेनालञ्चकार। कालेन पतिव्रताललामकुलभूतायाः श्रीशचीदेव्याः क्रमेण प्रसूतासु परलोकमितासु चाष्टसु कन्यकासु सन्ततिविरहखिन्नहृदयः श्रीमज्जगन्नाथस्तनयाधिगतये श्रीविष्णुमाराधयामास। अप्राकृतनित्यधर्ममूलादर्शः श्रीमन्मिश्र-

महोदयः सहधर्मिणीद्वितीय एवं पुरुषावतारलीलानुकूलया विमलोपासनया वैकुण्ठपदं महासङ्कर्षणमात्मनो नवम-संततिरूपेण जगति प्रकाशयामास । जाते च तनये श्रीमन्मिश्रः परमानन्दसिन्धुमवगाहमानः शास्त्रविद्भिर्विप्र-गणैस्तस्य जातकर्मादिकं यथाविधानं विधाय विश्वरूप इति तस्य नाम चकार ॥

अनन्तरं च वारव्योमवेदविधुप्रमाणे शाकहायने व्यपगते च भूतलाच्छिशिरापगमच्छलेन कर्मजडत्वे संप्राप्ते च निखिलसुषमासंभूतनवकुसुमसमयसमागममिषेण सर्व-जनहृदयसन्तापसंततिहारिणि प्रेमधर्मे प्रचरति च मन्दं मन्दं मलयसमीरणसंचरणमिषेण सर्वत्र शान्तिसंदेशे विकसति च काशकुसुमविकासमिषेण वसुधाया हासराशौ भासमाने च सहकारमुकुलोद्गममिषेण पुलकप्रकाशे समुच्चार्यमाणे च कोकिलकाकलिमिषेण महापुरुषाविर्भावनिमित्तकनान्दीवचने संपठ्यमानायां च मकरन्दसुरभिकुसुमकुञ्जपुञ्जेषु मधुकर-निकरगुञ्जनमिषेण महापुरुषस्तवावलौ समागते च श्री-नन्दनन्दनहिन्दोलनमहोत्सवे संप्रकाशमाने च फल्गुराग-मिषेणाशावधूमुखमण्डले नवानुरागे विविधशिवयोगपूर्णायां

फाल्गुनपूर्णिमायामप्राकृतपूर्णतायाः प्राकृतपूर्णत्वपराभावकत्वं निवेदयितुमिव राहुग्रासमिषेण लोकलोचनागोचरत्वमापन्ने पूर्णचन्द्रे निरन्तरहरिध्वनिमुखरिते निःस्तब्धकर्मकोलाहले च विश्वमण्डले कृष्णकीर्तनोन्मत्ते जनगणे सिंहराशौ सिंहलग्ने श्रीशचीगर्भपयोधिमध्यात् श्रीमायापुरपूर्णचन्द्रो गौडगगने समभ्युदय मधिजगाम । तदानीं च श्रीमदद्वैतहरिदास-श्रीवासमुखा वैष्णववराः परदुःखतिमिरभरपीडितस्य हृदय-गगनस्य निशावसानमन्तरुपलभमानाः स्वस्वभवनेषु सानन्दं नृत्यरताः समभवन् । पुरललनाश्च विविधोपायनपाणयः श्रीमायापुरपूर्णचन्द्रस्य वदनमण्डलं निरीक्षितुं मिश्रभवन-मुपाजग्मुः । श्रीमन्नीलाम्बरचक्रवर्तिमहोदयोऽपि ज्योति-र्विज्ञानबलेन तस्य निखिलमहापुरुषलक्षणनिवहं संपश्यन् ज्ञात्वा च विश्वधारकपोषकत्वं विश्वम्भर इति नाम प्रकाशमकार्षीत् । पुरललनाश्च निरुपमां गौरकान्तिं हरिकीर्तनश्रवणमात्रेण रोदननिवृत्तिं समुल्लासं च संलक्ष्य श्रीमायापुरचन्द्रस्य गौरहरिरिति नामाभिधानं चक्रुः । अप्राकृतसहजस्नेहमयी श्रीमती शचीदेवी तु कन्याष्टक-वियोगकष्टमधिगता नवजातनन्दनस्य शमनानास्वाद्यत्व-

माशासाना तिक्तरसनिम्बफलनामानुसारेण "निमाइ" इति नामधेयं निरणैषीत् । केचित्तु निम्बतरुतले तदुदयमेव तादृशनामकरणकारणत्वेन कल्पयन्ति ॥

एवं च निष्कलङ्के गौरचन्द्रे सकलकलेऽपि कालक्रमेण क्रमाद्वृद्धिलीलामाविष्कुर्वाणे लीलाकल्लोलनीरनिधेरस्य बाललीलालक्ष्म्या नित्यनवनवायमानलास्यविलासः शचीसुखललनाकुलस्य विस्मयजालं कलयामास । नामकरणकाले श्रीमन्मिश्रेण बालस्य भविष्यदभिलाषपरीक्षणार्थं पुरतः संस्थापितेषु पुस्तकलाजधान्यकपर्दकसुवर्णरजतादिषु विविधवस्तुजातेषु स श्रीमद्भागवतमेव जग्राह ॥

क्रमेणाविर्भावितजानुचङ्क्रमणलीलोऽसौ कदाचिदन्तर्निलयगतस्य कुण्डलीकृतकायस्य कुण्डलिनः कायमधिकृत्य शयानः शेषशयनलीलामाततान । तद्दर्शनेनोद्वेलितवात्सल्यसलिलनिधौ शचीप्रमुखे सहजशुद्धप्रेमरसरसिके ललनाकुले भयाकुले रोदनशीले गरुड गरुड इत्याह्वयति च भुजगवेषः शेषोऽसौ तस्मादपससार ॥

एवं च कालेन कमलकोमलकमनीयचरण-संचरणलीलालयतां कलयति श्रीलीलानिलये गौरहरौ तस्य बाल्यविलासलक्ष्मीरतिचञ्चलतां प्रकटयामास। तदानीमसौ स्वयमेव भवनाद्बहिर्विचरितुमारेभे। तदा निरुपमललितरूपलावण्यविमुह्यमानमानसैर्नगरनिवासै रसावे-शेनोपायनीकृतं सुरसमशेषं फलमिष्टान्नादिकं बालोऽसौ हरिकीर्तनरताय नवद्वीपललनाकुलाय प्रसादत्वेन कल्पया-मास। कदाचिद्वा बान्धवगणभवनमुपेत्य गृहस्वामिनः परोक्षं दधिदुग्धक्षीरसारादीनि द्रव्याण्यास्वाद्य कदाचिद्वा रहसि गृहवस्तुजातं भग्नं कृत्वा पलायनलीलामनुशील-यामास। गृहस्वामिनश्च तदवलोकनसंक्रुद्धमानसा विहित-प्रतिकारसंकल्पा अपि तत्समीपमागत्य निर्निमिषसतृष्ण-नयनयुगलेनास्वादितं सुधाधाराधारस्य श्रीगौरसुधाकरस्य वदनमण्डलसुधारसममूल्यं मूल्यमिव विनष्टद्रव्याणां स्वीकृत्य स्वगृहं प्रतिजग्मुः॥

एकदा श्रीशचीदेव्यां लाजमिष्टान्नादिकमुत्तमं भक्ष्य-वस्तुजातं स्वनन्दनाय प्रदाय गृहकर्मव्यपदेशेन स्थानान्तर-गतायां बालस्तद्विहाय मृत्तिकामत्तुमारेभे। तद्दृष्ट्वा च

भर्त्सयन्तीं जननीं प्रति बालकोऽसौ मृण्मयत्वेन जीवदेहस्य जीवभक्ष्याणां च सर्वेषामैक्यमेव निरूपयामास । तदाकर्ण्य सा जागतिकवस्तूनां मृण्मयत्वेनाभेदेऽपि मृद्विकारान्नभक्षणे देहस्य स्वास्थ्यं केवलमृद्भोजने तदस्वास्थ्यं मृण्मयेन घटेन जलाहरणं केवलेन मृत्पिण्डेन तदभावश्चेति वैशिष्ट्यं प्रकाशयामास । तेन च नितरामानन्दितचेताः श्रीगौर-हरिः शुष्कज्ञानवादिनामेकदेशविचारपरिहारेण भक्तानां सार्वभौमयुक्तवैराग्यस्य सेवाया अनुकूलप्रतिकूलविचार-ग्रहण मावश्यकमिति जीवकुलं शिक्षयामास ॥

कदाचित् गोपालभक्तः कश्चित् तैर्थिकविप्रवरः श्रीमायापुरे मिश्रभवनमतिथिधर्मेणाश्रितः सद्वैष्णवसेवापरेण मिश्रवेरणाद्रियमाणः पाकादिकं विधाय ध्यानयोगेन यदैव स्वाभीष्टमूर्तये श्रीगोपालाय भोग्यं निवेदयितुमारेभे, तदैव श्रीगौरहरिः सहसा समुपेत्य तदन्नं बुभुजे । ततश्च ब्राह्मणो मिश्रमहोदयेनानुरुद्धः पुनरप्यन्नं विधाय तथा निवेदयन् श्रीगौरहरिं पूर्ववदन्नं भुञ्जानं ददर्श । अनन्तरं च विश्वरूपेणानुनीयमाने विप्रवरे पुनरपि पाकाय प्रवर्तमाने निद्राभिनयमाविष्कुर्वाणे च गुरुजनैरन्तर्गृहमवरुद्धेन

श्रीगौरहरिणा स्वेच्छया प्रेषिता स्वप्नदेवी गृहजनानशेषा-नभिभावयामास । तदानीं च विहितपाके विप्रवरे पुनरपि स्वेष्टदेवाय भोज्यं ध्यानयोगेन निवेदयति सहसोत्पतिते श्रीगौरचन्द्रे च पूर्ववदन्नमभ्यवहरति दैवविहितमतिर्ब्राह्मणो विलापवचनमारेभे । श्रीगौरहरिस्तदा चतुर्भुजं द्विभुजं च विग्रहं प्रकटयन् स्निग्धश्लक्ष्णमधुराक्षरया गिरा द्विजवरं सादर-मेवं बभाषे—"भूसुरवर ! त्वं मे नित्यकिंकरोऽसि । यदाहं बृन्दावने नन्दनन्दनलीलां सानन्दमभिनिनाय तदापि ते वृत्तमेवं बभूव । साम्प्रतमपि भवद्भक्तिरसाभिषिक्तमानसेन भक्तवशेन मया स्वरूपमिदं भवद्दर्शनगोचरं कृतम्"—इति । ब्राह्मणस्तु तदा स्वेष्टदेवसंदर्शनोद्वेलितप्रेममहामृत-समुद्रे निमज्जमानमात्मानं बहुमन्यमानः प्रभुभुक्तावशेष-मशेषस्वश्रेयससमावेशं सुरसमास्वादयामास । प्रभुरपि गुप्तलीलामिमां प्रकाशयितुं भूसुरवंशभूषणं निषिषेध ॥

अन्यदा च निजनिवासाद्बहिर्देशे विहरन्तं हेम-हारादिविभूषितं सुमनोहरं गौरहरिं निरीक्ष्य तदलं-कारापहारदुराशावशं तस्करयुगलं भगवन्तं मधुरभोज्यदान-मिषेणात्मसदनमासादयितुमियेष । तदानीं तत्स्कन्ध-

मारूढः श्रीगौरहरिस्तु निजमायाजालप्रपञ्चनेन चौरयुगलं वञ्चयित्वा भ्रान्तमार्गं तत्पुनर्निजभवनद्वारमेव प्रापयामास। चौरद्वयमप्यविदितविष्णुमायारहस्यमिश्रभवनद्वारि व्याकुलचेतसां निजजनानां पुरतस्तं संस्थाप्य द्रुतं प्रतस्थे ॥

कदाचिच्च सर्वज्ञः श्रीमद्गौरसुन्दरः स्वभक्तमात्मप्रकाशविज्ञापनेन कृपयितुमेकादशीदिवसे सर्वेषां नैवेद्यानां केवलं भगवद्ग्राह्यत्वं च प्रकाशयितुं तद्वासरे श्रीमायापुरमिश्रमन्दिराद्दक्षिणपूर्वतः क्रोशव्यवहिते श्रीहिरण्य जगदीशपण्डितयोरुदवसिते कल्पितं विष्णुनैवेद्यमानेतुं तातपादं प्रेरयामास। हिरण्यजगदीशौ च सश्लीकौ मिश्रचरणाद्बालकस्य तादृशमभिलाषमभिगम्य दूरवर्तिनस्तस्य स्वभवनकल्पितविष्णुनैवेद्यपरिज्ञानं विचिन्त्य विष्णुशक्तिविलासोऽयमिति मन्यमानौ तत्सर्वं मिश्रवरकरे समर्पयामासतुः। एवं च कालक्रमेण श्रीगौरहरेर्बाललीलाविलासे क्रमशश्चञ्चलतरतां प्रकाशयति दिवानिशमेव श्रीशचीदेवीसकाशे नगरनिवासिनस्तदुपद्रवसंदेशराशिमुपस्थापयामासुः। कदाचिद्वा बालकः कोपावेशवशतां प्रकाशयन् गृहवस्तुजातं बभञ्ज। कदाचिद्वा लब्धप्रहारवेदनां हतवेदनां जननी-

मालोक्य प्राप्तवेदनः स्वयमेव नारिकेलफलं तत्कालदुर्लभं तस्याः सुस्थतां संस्थापयितुं सहसैवानिनाय। प्रतिदिनं च सुरधुनीसलिलमवगाहमानः कुमारीगणैरनल्पान् परिहासान् कल्पयामास। कदाचिद्वा कुमारीणां शिवगङ्गादिपूजासाधन-संभारमवलोक्य गङ्गादुर्गाशिवादीनां स्वदासत्वं प्रतिपाद्य स्वयं नैवेद्यराशिं स्वीकुर्वाणस्तासु कारुण्यं विष्णोः सर्वेश्वरत्वं च प्रकाशमनैषीत्। कदाचिद्वा श्रीवल्लभाचार्यनन्दिन्याः श्रीमल्लक्ष्मीदेव्याः संदर्शने तयोर्नित्यसिद्धप्रीतेः स्फूर्ति-रजायत॥

विश्वंभराग्रजन्मा श्रीविश्वरूपस्तु जन्मावधिसंसार-विरक्तः सर्वसद्गुणनिलयः सर्वशास्त्रसुपण्डितश्चासीत्। स तु निरन्तरं जडविषयविमुखमतिर्वैष्णवसङ्गेन श्रीहरिकथा-श्रवणकीर्तनादर्शशिक्षाप्रकाशार्थं प्रायश एव श्रीमायापुर-धामनि श्रीमदद्वैताचार्यसभायामवर्तत। श्रीमद्गौरसुन्दरे च समतिक्रान्तभोजनसमयमग्रजन्मानं मातुरनुज्ञया प्रतिदिनं गृहमानेतुं श्रीमदद्वैतसभामलंकुर्वाणे सभामण्डनं वैष्णव-मण्डलमनुपमरूपनिरूपणसम्मुग्धमानसं संवभूव॥

कियत्कालविगमे च श्रीमद्विश्वरूपे प्रकटितसंन्यासिरूपे शंकरारण्यनामनि परिहृतमायापुरधामनि संलीनबालचापललीलः श्रीमद्गौरहरिः शास्त्राभ्यासे प्रकाशितमनोनिवेश आसीत्। श्रीमान्मिश्रमहोदयस्तु शास्त्राध्ययनेनैव विदितविश्वविनश्वरत्वस्य विश्वरूपस्य संन्यासं संचिन्त्य श्रीमद्गौरहरेरपि तथागतिमायतिमाशङ्कमानस्तमध्ययनान्निवारयामास। तदानीं च तस्य चापल्यविलासः पुनरपि सविकासमासत॥

कदाचिद्गृहाद्बहिर्देशे विष्णुनैवेद्यपाकशेषे विवर्जिते मृण्मयभाण्डराशौ समासीनं तनयं श्रीशचीदेवी तत्स्थानपरिहारेण स्नानार्थमादिदेश। बालस्तु तदा विद्याहीनस्य शुभाशुभपुण्यापुण्यविवेकराहित्यं विष्णुनैवेद्यपाकभाण्डानामशुद्धिसंभावनाभावं भगवदधिष्ठितक्षेत्रस्य च सर्वशुभाश्रयत्वं गङ्गाद्यशेषपुण्यतीर्थमयत्वं च जननीमुपदिश्य तद्व्यपदेशेन कर्मजडस्मृतिवादिनां मोहनशास्त्रज्ञानजन्यं पुण्यापुण्यविचारं जडत्वेन शुद्धवैष्णवानां चिन्मयविचारं परमरमणीयं सर्वसिद्धान्तशिरोरत्नतया प्रकाशमापादयामास॥

एवं च यथाकालं कृतोपनयनः श्रीमद्गौरसुन्दरः श्रीधाममायापुरप्रान्तवर्तिनि गङ्गानगरे श्रीगङ्गादासाभिधानस्योपाध्यायशिरोमणेरन्तेवासित्वं स्वीकृत्य व्याकरणशास्त्रमधीयान एवासीमधिषणाविकासैर्देशिकप्रवरं विस्मापयन् सभायां नानादेशसमागतं मनीषिसमवायमशेषशास्त्रवादेषु प्रथितयशसं कूटप्रश्नविलासैः पराभवमनिशमनैषीत् ॥

एकादशौ साग्रहं गृहीतमातृचरणः श्रीगौरहरिरेकादश्यां तां प्रत्यन्नाशननिषेधशासनं विज्ञापयामास ॥

ततः कदाचिच्च स्वप्नानुभूतश्रीगौरहरेर्भाविसंन्यासेन श्रीमन्मिश्रमहाशयेन विमनसा कियद्दिवसावसाने वसुधावासिनामदृश्यपदं प्रपेदे । श्रीगौरहरिणापि तदा जननीं प्रति सान्त्वनभाषासंततिं समयोचितां प्रयुज्य कदाचिदर्थाभावे संप्राप्ते तस्याः हस्ते सुवर्णतोलकद्वयमसंभाविातागमं समर्पितम् । अनन्तरं गृहीतगृहस्थलीलाविलासाभिलाषे श्रीगौरहृषीकेशे विधिनिर्देशप्रेषितेनेव समागम्य घटकेशेन श्रीवनमालिना श्रीशचीसकाशे श्रीमद्वल्लभाचार्यसुतया साक्षाद्वैकुण्ठलक्ष्मीलक्ष्मलक्षितया श्रीमल्लक्ष्मीदेव्या सार्द्धमस्य

सम्मेलने सम्मतिर्जगृहे । ततश्च कदाचित् संप्राप्ते शुभदिवसे सर्वशुभयोगाश्रये विवाहविधिना श्रीगौरलक्ष्मीसमागमः समभवत् ॥

एकदा श्रीमाधवेन्द्रपुरीचरणचरणशरणे श्रीमदीश्वरपुरीचरणे नवद्वीपमागत्य श्रीमदद्वैतभवनमाश्रयमाणे श्रीगौरहरिस्तमाहूय स्वभवने भिक्षान्नं ग्राहयामास । एवमन्येद्युः श्रीपुरीपादे श्रीकृष्णप्रसङ्गरङ्गाकुलमतिना श्रीगौरहरिणा स्वप्रणीतस्य श्रीकृष्णलीलामृतग्रन्थस्य संशोधनमभिलषति श्रीगौरचन्द्रः श्रौतमार्गाश्रयिणां श्रीगुरुवैष्णवानां कृतिषु दोषलेशाभावं तत्रासूयापरवशानां दोषान्वेषिणां पाषण्डित्वं च कथयामास ॥

कदाचिच्च श्रीमायापुरसुधाकरे स्वैरं विचरितनवद्वीपनगरे स्वीकृततन्तुवायगोपमालाकारताम्बूलिकप्रमुखनागरिकनिकरोपहृतद्रव्यसंभारे कस्यचित् सांवत्सरस्यागारं संप्राप्य तं प्रति पृष्टविगतजन्मवृत्तान्ते दैवज्ञोऽसौ जपितगोपालमनुस्तदतीतजनुर्वृत्तं गणयन् चतुर्भुजद्विभुजादीनि भगवद्रूपाणि ददर्श । तदनन्तरं च श्रीगौरहरिः कदलीवल्कलविक्रयिणः श्रीधरस्य भवनं संगम्य तेन

साकं प्रेमकलहं कलयन् प्रतिदिनं तदुद्यानात् विना मूल्यं कदलीतद्गर्भमूलकादीनां प्रदानार्थं प्रतिश्रुतिं कारयामास ॥

ततश्च कालक्रमेणाध्यापकशिरोमणिवरे श्रमद्गौरहरौ नवद्वीपमण्डलं विमण्डयति विजिताशेषदेशः प्राप्तसरस्वतीकृपादेशः श्रीनवद्वीपनगराद्विजयपत्रसंग्रहे विहितमानसः काशीधामतः कश्चिद्विपश्चित्कुलशेखरः श्रीमायापुरमुपसंगम्य स्वप्रभाभिः सुरधुनीतटप्रदेशं भूषयन्तमुडुगणपरिवृतं चन्द्रमसमिव शिष्यमण्डलमध्यगतं श्रीमायापुरचन्द्रमसं ददर्श । ततश्च विदिततदभिलाषेण श्रीमायापुरभूषणेन समादिष्टोऽसौ सुरधुनीमाहात्म्यश्लोकान् विरचय्य द्रुततरमुच्चारयितुमारेभे । भारतीप्राणप्रभुणा श्रीमन्महाप्रभुणा च तत्क्षणमेव श्रुतिधरतामलक्षितपूर्वां प्रकटयता तदुच्चारितश्लोकजातेषु दोषराशिराविश्चक्रे । अथ प्राप्तपराभवश्चासौ निशायां स्वप्ने सरस्वतीमुखाद्गौरचन्द्रस्य सरस्वतीपतित्वं तदाश्रयादेशं च ज्ञात्वा प्रातस्तत्समीपे विनिवेदितस्वप्नवृत्तस्तन्मुखात् कृष्णभजनोपदेशं प्राप ॥

तदनन्तरमर्थसंग्रहव्यपदेशेन संप्राप्तपूर्वदेशेन प्रचारितनामसंकीर्तनोपदेशेन निखिलदेशिककुलावतंसेन श्रीमायापुराधीशेन तत्र स्वविद्याविलासाकृष्टचेतसां परःशतानामन्तेवासिनामुपाध्यायपदमलंचक्रे । तदानीं नानाशास्त्रेषु मतभेददर्शनात् साध्यसाधनतत्त्वे संशयाकुलमानसस्तपनमिश्रनामा कश्चिद्द्विजवरः संप्राप्तस्वप्नादेशस्तत्सकाशमागत्य श्रीहरिनामसंकीर्तनमेव केवलं साध्यसाधनत्वेन लब्ध्वा तदादेशात् काशीधाम जगाम । ततश्च पूर्वदेशान्नवद्वीपं प्रतिनिवृत्तः श्रीनवद्वीपलक्ष्मीं श्रीमल्लक्ष्मीदेवीमात्मविरहभुजगदंशनाद्वैकुण्ठपदमलंकुर्वतीमुपश्रुत्य मातर मसार सं सा र स्य विनश्वरतामुपदिदेश । तदनन्तरं च श्रीमद्बुद्धिमन्तखानाभिधानेन केनचिल्लक्ष्मीकृपाभाजनेन जनेन धनव्ययं स्वीकृत्य नवद्वीपनरपतिसभाविदुषः श्रीसनातनमिश्रमहाशयस्य सुतया निरुपमरूपया लक्ष्मीरूपया श्रीविष्णुप्रियाभिधानया पुनरपि शुभवासरे श्रीगौरनारायणस्य सम्मेलनमकारि । ततश्च श्रीगुरुवैष्णवचरणशरणपरायणत्वमेव जीवानां नित्यधर्मः साधुसम्मेलनमेव केवलं तीर्थादिपर्यटनफलं साधूनां दर्शनमात्रादेव कोटिपिण्ड-

दानाधिकफलोदयस्तेषामेव परमतीर्थत्वं वैष्णवसद्गुरु-चरणाभिगमनात् पूर्वं यावदेव जीवानां काम्यकर्माभिरुचि-रित्यादितत्त्वानि जीवकुले तुलामूलविचारणे प्रचारयितु-माविष्कृतज्वरितलीलेन विहितविप्रपादोदकपानाभिनयेन श्रीगौरनारायणेन गयागमनं पितृपिण्डादिदानं गदाधर-पादपद्मसंदर्शनमीश्वरपुरीपादाभिगमनं तस्मिन्नात्मनिवेदनं ततश्च दशाक्षरमनुग्रहणमित्येवं परमशिक्षाफला लीलावली लोकलोचनगोचरतामनायि ॥

तदनन्तरं च गयाधामतः प्रतिनिवृत्तस्य तस्य स्वरूपप्रकटनसमयसमागमेन शरत्समयेनेव वार्षिकनदस्य प्रौढत्वेनेव यौवनस्य तत्त्वज्ञानोदयेनेव काम्यकर्मपरायणस्य भावान्तरे समुपस्थापिते तदानीमैन्द्रजालिकेनापहृतमिव पूर्वचापल्यजातं विलयपदं प्रपेदे ॥

किं च तदा निरन्तरमन्तरङ्गनिजजनेषु रहसि गयावृत्तमभिधातुं प्रवृत्तः कृष्ण कृष्णेति प्रवदन्नविरलविगल-न्नयननीलोत्पलयुगलजलधाराभिषिक्तकपोलमण्डलः कम्प-पुलकाद्युपलक्षितो बभूव । अपि च तदानीमन्तेवासि-

गणान्तिके शास्त्रोपदेशसमये तेन सर्वशास्त्रेष्वद्वितीयं श्रीकृष्णनामधेयमेवाभिगीयत इत्याविष्कृतविद्वद्वृद्धिवृत्तिविलासेन सूत्रवृत्तिटीकापदादीनामर्थप्रकाशे सर्वत्र कृष्णनामैवावादि । कदाचिद्वा कपिलभावविभावितचेतसा श्रीशचीदेवी जीवानां गर्भवासादिसन्तापराशिप्रकाशनेन सततं सत्सङ्गतः श्रीकृष्णनामग्रहणोपदेशभाषनमग्राहि ॥

कदाचिद्वा लोकेषु वैष्णवसेवाप्रकाशमानसेन स्वयमेव तेषामशेषसेवाविधानं चक्रे । कदाचिद्वा शिरसि वैष्णवपदरजसां धारणमिषेण वैष्णवानुकम्पयैव श्रीकृष्णभजनप्राप्तिरिति तत्त्वं प्रकाशपदं निन्ये ॥

एवं गयाधामनि संन्यासिवेषिणः श्रीमदीश्वरपुरीचरणात् कृष्णमन्त्रदीक्षाधिगमसमयमारभ्यैव प्राप्तभावविपर्यासेन प्रदर्शितप्रेमप्रकाशेन भक्तवेषेण जगदीशेन कृष्णतत्त्वप्रदीपोद्भास्यमानमानसस्य पुरुषमात्रस्यैव गुरुत्वं ततश्च दिव्यज्ञानभास्करकरसंचरणाच्छिष्यसारसाकरस्य मुकुलितमानससरसिजविकासेन प्राक्तनदशाविपर्यासश्चेति जनेषु सत्यं निरणायि ॥

श्रीविश्वरूपसंन्यासाद्वात्सल्यरसमधुरेण सुमधुरा तनयवियोगविधुरा श्रीशचीदेवी श्रीमदद्वैताचार्यमेव तस्य वैराग्यवैश्वानरसमीरणत्वेन दूषयामास । तदपराधमेव तस्याः मानसक्षेत्रमध्यगतप्रेमबीजोद्गमनिग्रहे दुर्ग्रहकल्पितमवग्रहं कथयति कदाचित् श्रीवासभवने विष्णुपर्यङ्कमाश्रयमाणे श्रीगौरनारायणे भक्तगणैस्तत्रानीयमाने च श्रीमदद्वैताचार्य-चरणे शचीमातृमाहात्म्यकीर्तनपरायणे प्रकाशितप्रेमपारावार-पारायणे लब्धावसरा श्रीशचीदेवी तदीयं चरणारविन्दरजः शिरसि दधाना मन्तुशान्तिं कामयामास ॥

एकदा श्रीवासाङ्गणे श्रीगौरनारायणः श्रीमदद्वैता-चार्येण प्रार्थितः सन् श्रीकृष्णलीलाकालकल्पितं विश्वरूपं तस्मै प्रदर्शयामास। अन्येद्युश्च तत्रैव भक्तगणैरभिषेकमहोत्सवे संपादिते समाश्रितविष्णुपर्यङ्कोऽसौ स्वकीयं राजराजेश्वरैश्वर्यं प्रकाशयन् यथाभिलाषं सर्वेषां पुरुषार्थराशिं साधयामास ॥

श्रीगौरसुन्दरस्य द्वितीयविग्रह इवाभिन्नरोहिणी-नन्दनः श्रीनित्यानन्दस्तु वीरभूमिप्रदेशगतैकचक्राग्राम-निवासिनः श्रीहाडाइ पण्डितस्य नन्दनत्वेन पद्मावत्या-मुदियाय । स च बाल्यलीलायामेव केनचिदतिथिरूपेण

वैष्णवसंन्यासिना पितुरन्तिकाद्भैक्षत्वेन गृहीतस्तेन साकं पर्यटितनानादेशः श्रीमाथुरमण्डले बहुकालं कृतनिवासः श्रीनवद्वीपचन्द्रेणाकृष्टस्ततश्च नवद्वीपमागत्य नन्दनाचार्य-भवने रहस्युवास । ततश्च विदितवृत्तेन श्रीगौरहरिणा स्वगृहमानिन्ये ॥

अनन्तरं च श्रीमन्महाप्रभुणा नियुज्यमानौ श्रीम-न्नित्यानन्दहरिदासठक्कुरपादौ श्रीनवद्वीपनगरे प्रतिगृहद्वारं हरिनामप्रचारार्थं चेरतुः । एकदा च विभावर्यां नगरे कृतनामप्रचारः श्रीमन्नित्यानन्दः श्रीहरिदासठक्कुरेण सार्धं श्रीमन्महाप्रभुभवनं प्रत्यागच्छन् साक्षान्निलयाविव कलि-कालस्य, किंकराविव कृतान्तस्य, कायाविव कलुषानाम्, आकराविव सर्वदोषाणाम् ब्राह्मणापसदौ जगदानन्दमा-धवानन्दाभिधौ राजमार्गे स्वैरं विचरन्तौ ददर्श । तयोस्तु गोमांससुरासेवनपरस्वपरदारहरणाद्यनेकदुराचारपरायणत्वेऽपि प्राक्तनपुण्यत एव कदापि वैष्णवनिन्दानामवसरो नाजायत ॥

परदुःखैककातरः कारुण्यवारिधरः प्रेमरत्नाकरः सततं वराभयकरः पतितपावनवरः श्रीमन्नित्यानन्दप्रभुवरः

श्रीहरिदासठक्कुरचरणश्च दर्शनान्तरमेव सहोदरयुगलं तारयितुमियेष । माधवानन्दोऽपि तदानीमवधूतसंज्ञाकर्णनमात्रमेव कोपाकुलमानसः श्रीनित्यानन्दशिरसि कलशकपालं निचिक्षेप । जगदानन्दे तु माधवानन्दं तादृशाचरणान्निवारयति तदानीं साङ्गोपाङ्गः श्रीगौराङ्गस्तत्र संगतस्तयोर्वधार्थं सुदर्शनं चक्रवरमामन्त्रयामास । तदा श्रीमन्नित्यानन्दे सप्राणरक्षकतया जगदानन्दस्य क्षमाप्रसादार्हत्वं निवेदयति श्रीमन्महाप्रभुः तस्मिन् प्रसादसुमुखो बभूव ॥

अथ तद्दर्शनात् पश्चात् प्राप्तपश्चात्तापस्य मन्दमतेर्माधवानन्दस्यापि तमसा चिरतरमन्धं हृदयकन्दरं नित्यानन्दारविन्दबन्धुकृपाकिरणमालोद्भासितमजायत । ततश्च कृतानुतापमनल्पपापं विहितकृष्णसेवासंकल्पं चण्डालकल्पं पाषण्डयुगलं श्रीमन्महाप्रभोः करुणया महाभागवतपदमध्यगच्छत् ॥

श्रीमन्महाप्रभुरेवमगण्यमहाकुलीनद्विजसमाकुले श्रीनवद्वीपमण्डले यवनकुलावतारेण श्रीहरिदासठक्कुरेण हरिनामप्रचारणं श्रीमन्नित्यानन्दप्रभुवरेण च पाषण्डयुगलोद्धारणं

कारयन्निखिलभूसुरनिकरगुरोर्वैष्णवाचार्यवरस्य प्राकृतजाति-विचारदूरचरजगद्गुरुत्वमक्षमवैष्णवापराधविमुक्तपापाचारिण एव श्रीमद्गौरनित्यानन्दकृपासुधाभिषेकाधिगमक्षमत्वं क्षमा-मण्डले विज्ञापयामास ॥

ततश्च निरन्तरं रजनीषु निरुद्धबहिर्द्वारे श्रीवास-पण्डितागारे प्रभुवरे परमान्तरङ्गैर्भक्तवरैर्हरिकीर्तनरसा-नन्दममन्दमनुभवति श्रीगौरहरौ कदाचिदनधिगतप्रवेशा-वसरः सुदुराचारो धरासुरकुलाङ्गारश्चापालगोपाल इति नामाक्षरैरभिधीयमानः कश्चिन्नराधमस्तत्र बहिर्द्वारस्य पुरतश्चण्डिकापूजाद्रव्यसंभारं समद्याधारं संस्थाप्य तदप-राधाद्गलत्कुष्ठाक्रान्तकलेवरो बभूव । पश्चाच्च पश्चात्तापपरे परमपीडाकातरे दुरितनिष्कृतिं कामयमानेऽपि तदानी-मपराधगुरुत्वं मन्वानः श्रीमन्महाप्रभुर्न तं निरामयं चकार । ततश्च गृहीतसंन्यासलीले नीलाचलात् प्रत्यागत्य कोलद्वीपमलङ्कुर्वाणे तस्मिन् शरणागतश्चापाल-गोपालस्तदादेशानुसारेण श्रीवासपण्डितस्य संतोषसाधनात् परं तत्प्रसादादागसः शान्तिमधिजगाम ॥

कदाचिदनधिकारिणां नराणां प्रवेशावसरं निवार्य रुद्धद्वारे श्रीवासमन्दिरे कीर्तनरङ्गागारे भक्तवरैरन्तरङ्गैर्हरिकीर्त्तनरङ्गमभिनयतोऽपि श्रीगौराङ्गचरणस्य रसोल्लासमसमीक्ष्य तत्र बहिर्मुखजनस्तिथिमाशङ्कमानः श्रीवासस्तदन्वेषणमितस्ततः कुर्वन् भवनकोणे कृतनिलायनं स्वस्य श्वश्रूजनमवलोक्य केशाकर्षणेन तं बहिष्कारयामास ॥

अन्यदा च श्रीमन्नित्यानन्दप्रभुवरः श्रीगौरसुन्दराल्लब्धादेशः श्रीव्यासपूजासंकल्पं कल्पयामास । तदानीं गृहीताचार्यपदे श्रीवासपादे श्रीहरिनामसंकीर्तनपुरःसरं कुसुममाल्यनिकरं श्रीगौराङ्गकण्ठदेशं संप्रापयति च श्रीमन्नित्यानन्दपादे श्रीमन्महाप्रभुः षड्भुजविग्रहं तदीयनयनयुगलसुग्रहं चक्रे ॥

एवं श्रीनवद्वीपमायापुरमलंकृत्य विहितविविधैश्वर्यप्रकाशस्य तस्य प्रेमगुणैराकृष्यमाणश्चट्टलदेशेऽवतीर्णः परमहंसकुलमौलिमालाविभूषणः श्रीमत्पुण्डरीकविद्यानिधिचरणस्तत्रागत्य तेन साकं मिलितो बभूव ॥

एकदा च श्रीवासभवने विष्णुपर्यङ्कमलङ्कुर्वाणेन श्रीमन्महाप्रभुणा परमैश्वर्याणि सर्वाश्चर्यमयानि प्रकटयां-

चक्रिरे । तद्भावस्य सप्तप्रहरव्यापित्वादद्याप्यसौ भक्तेषु सप्तप्रहरभाव इति महाप्रकाश इति च परिगीयते । तदानीं श्रीमन्महाप्रभुः स्वाभिषेकसलिलानयनरतां दुःखिनीं नाम श्रीवासपण्डितस्य काञ्चित् सौभाग्यवतीं परिचारिकां सुखिनी-संज्ञया कृपयामास । एवं श्रीधरस्य माहात्म्यप्रकाशं हरिदास-ठक्कुरे च प्रसादराशिं चकार । तस्मिन्नहनि श्रीमुकुन्दस्य द्वाराद्बहिरवस्थानाल्लब्धकृपेषु सर्वेषु भक्तेषु विनिवेदितमुकुन्द-वृत्तेषु श्रीमन्महाप्रभुणा भक्तगणसकाशे विशुद्धभक्तिवादा-नुरागं प्रकाशयतोऽपि तस्य मायावादिसमाजे योगवासिष्ठ-कल्पितमायावादश्रेष्ठत्वाङ्गीकार एव प्रसादभाजनत्वे प्रति-बन्धकत्वेन निरणायि । ततश्च मायावादिसङ्गपरिहारे तस्य दृढतरं सङ्कल्पं विदित्वा विहितप्रसादः स्वय-मतथ्यसमन्वयवादिनामन्याभिलाषकर्मज्ञाननिर्मुक्तशुद्धभ क्ति-निष्ठोदयात् पूर्वं यावद्भगवत्प्रसादप्राप्तिराहित्यं ज्ञापया-मास । जगद्गुरोः श्रीमहाप्रभोर्गुरुरूपिणः श्रीमदीश्वरपुरी-पादस्य सतीर्थे श्रीमदद्वैताचार्ये गुरुत्वज्ञानमासीत् । तेन च नितरां कातरचेता आचार्यचरणस्तस्य दण्ड-प्रसादमभिलषन् शान्तिपुरं गत्वा वञ्चनार्हेषु कतिपयेषु

जनेषु शुष्कज्ञानवादं व्याचचक्षे । अतश्च कोपाविष्टमानसेन श्रीमन्महाप्रभुणा शान्तिपुरमुपेत्य श्रीमदद्वैतप्रभुं प्रति दण्डप्रहारे विहिते स सानन्दं नृत्यपरायणः स्वाभिलाषपूर्तिवार्तां प्रचारयामास ॥

कदाचित् भक्तेषु श्रीहरिनाममाहात्म्यवर्णनकाले कस्यचिदन्तेवासिनस्तत्रार्थवादत्वप्रतिपादनवचनमाकर्ण्य तन्मुखदर्शने भक्तान्निषिध्य श्रीमत्प्रभुवरः सपरिकरः सचेलं स्नानमाचचार ॥

अन्यदा च भक्तगणैः सार्धं नगरेषु हरिनामसंकीर्तनावसरे श्रमकातर्यलीलां प्रकाशयता तत्र कस्यचित् भक्तप्रवरस्य प्राङ्गणे स्वेनैव रोपितादूसालबीजान्मुहूर्तसमय एवाङ्कुरादिक्रमेण फलान्यपरिमेयाण्युत्पाद्य तैराम्रमहोत्सवे संपादिते तदवधि तत्क्षेत्रमाम्रघट्टसंज्ञया विज्ञातं वर्तते ॥

एकदा च भक्तगणैर्गङ्गासैकते हरिकीर्तनानन्दसुधासागरप्लावनमनुभवता भगवता भवतापहारिणा श्रीगौरहरिणा दूरमम्बरमधिरूढं साडम्बरं जलधरपटलमालोक्य तदप-

सरणादेशे प्रकाशिते मेघमण्डलं व्यलीयतेति तत्स्थलं मेघ-सैकतमितिख्यातिमधिजमाम ॥

कदाचिच्च कलितबलदेवभावावेशे विधृतयमुनाकर्षण-लीलाविलासे विहितमध्वानयनादेशे तस्मिन् श्रीवनमालि-चन्द्रशेखराचार्यप्रमुखैर्भक्तगणैस्तदीयपाणिदेशे सुवर्णमुसल-मदर्शि ॥

वङ्गविजेतुर्वक्तियार खिलिजिनामधेयस्य यवनवीरस्य नवद्वीपाधिकारात् पश्चादत्र सनातनधर्मप्रभावः प्रभाव-राहित्यमध्यगच्छत् । श्रीमन्मायापुरचन्द्रमसः समुदयात्त-त्प्रतिभाप्रभाप्रभावितः पुनरसौ समुज्ज्वलो बभूव । भगवान् श्रीगौरहरिस्तु श्रीहरिनामप्रचारकाले श्रीवासमन्दिरपरिसर-चरान्नगरनरानादौ करतलघातपुरःसरं कीर्तनं कर्तुमादि-देश । तेन च क्रमशो नगरे मृदङ्गकरतालादिवादनैरुच्चैः स्वरं प्रतिद्वारं हरिनामप्रचारः प्रससार । तेन च कोपाविष्टचेताः तात्कालिकनवद्वीपपुरशासनविधाता चांदकाजी महोदयः कदाचित् सायं श्रीमायापुरेश्रीवासागारसमीपवर्तिनः कस्य-चिन्नगरवासिनो भवनमुपेत्य कीर्तनावसरे मृदङ्गं बभञ्ज । पश्चादेवमाचरिते प्रचण्डदण्डजातिविघातादिभयं च ज्ञापया-

मास । ततश्च तत्स्थानमधुनापि ग्राम्यभाषायां खोल् भाङ्गाडाङ्गेति(मृदङ्गभङ्गक्षेत्रमिति) सर्वत्र प्रख्यायते । अनन्तरं च विदितवृत्तः प्रकटितकोपावेशः श्रीमन्महाप्रभुर्नगरनरान् तारस्वरेण हरिनामसंकीर्तनमादिश्य तेषां भयापसारणार्थं परदिवसे श्रीमन्नित्यानन्दाद्वैतहरिदासादीन् भक्तगणानशेषान् नगरनिवासांश्च समाहूय मण्डलत्रयं विरचय्य मृदङ्गादिविविधवाद्यध्वनिपुरःसरं कीर्तनमुखेन नगरं पर्यटन् काजीमहोदयगृहमियाय । विदिततदागमनवृत्ते च तस्मिन् शासकवरे भयाद्गृहाभ्यन्तरं प्रविष्टे श्रीमन्महाप्रभुस्तं जनैराहूय यवनधर्माचारेषु बहुधा पर्यनुयोगं कुर्वन्निरुत्तरवचनं विदधौ । ततश्च शासकमहोदयः सर्वाणि पूर्ववृत्तानि प्रभुपदे निवेदयन्नुवाच—कदाचित् केचित् पाषण्डहिन्दुजना मामुपेत्य एवमवदन्—भो धर्माधिकरणपते ! श्रीमायापुरवासी श्रीजगन्नाथमिश्रनन्दनो निमाइ नामा कश्चिदस्माकं स्वधर्माचरणव्याहतिं जनयति । इतः पूर्वं मङ्गलचण्डीविषहारिणीप्रमुखदेवतापूजनेन रजनीजागरणं सर्वेषां धर्मकृत्यमासीत् । परं तु गयाधामतः प्रतिनिवृत्तेन तेन तद्विपरीतधर्ममतः प्रचार्यते । मृदङ्गकरतालादिवाद्यध्वनिपुरःसरं तारस्वरं हरि-

कीर्तनं च प्रचारयता श्रोतृश्रोत्रस्तब्धत्वमुत्पाद्य प्रतिदिनं रजन्यां नगरवासिनां शान्तिनाशः स्वप्नविघातश्च विधीयते । धर्मशास्त्रेषु मनसैवेश्वरनामग्रहणे विहितेऽपि तेन तद्वैपरीत्यमनुष्ठीयते । किं च तेन कृतस्वनामविपर्यासेन गौरहरिरित्यभिधानमभिधीयते । ततश्च भवता शासकवरेण प्रतिविधानपरेण नगरात्तस्य बहिष्करणं कार्यमिति । ततश्च मदादेशान्नगरे कीर्तननिषेधमाचरति पदातिके सहसा केनचिदलक्षितरंहसा जातवेदसा समागत्य भस्मीकृतश्मश्रुराशिना तद्वदनमण्डले व्रणजातमुदपादि । किं च हृ धातोर्हरणार्थकत्वं व्याख्याय हरिनामग्रहणरतान् जनान् परधनहरणसंकल्पकत्वेन परिहसतस्तस्य रसना साम्प्रतमनिच्छतोऽपि निरन्तरं हरिनाम समुच्चारयति । ततः परं श्रीवासवाससकाशे मृदङ्गभङ्गानन्तरं निशायां मानुषशरीरः केसरिवदनः कश्चिद्भीमविग्रहो मामुल्लम्फ्य भीषणदशनकषणपुरःसरं सवंशविनाशाभिलाषप्रकाशनेन साध्वसमदर्शयत् । साम्प्रतमपि वक्षसि मे तदीयप्रखरनखरराजिपदानि विराजन्त इति । अथ तदानीमुच्चारितहरिकृष्णनारायणादिभगवदभिधानं भगवत्पदयुगलमशेष-

शुभनिधानं शिरसि दधानं संकीर्तनविघातनिवृत्तये विहित-प्रणिधानं वैष्णवसज्जनेषु सावधानं विलीननिखिलकलुष-निधानं प्राड्विवाकप्रधानं स्वहृदये निधाय कारुण्यजल-निधिस्तदपराधं चक्षमे । अधुनापि तद्वंशधारिणः श्रीधाममायापुरसविधे निवसन्तः श्रीनवद्वीपधामपरिक्रमा-विधौ सानन्दं कृष्णकीर्तनमाचरन्ति ॥

एकदा श्रीवासाङ्गणे कीर्तनसमये श्रीवासस्य कश्चिन्नन्दनः परलोकमियाय । श्रीवासश्च महाप्रभोः कीर्तन-रसानुभूतिव्याहतिभयेन परिजनान् क्रन्दनाद्वारयामास । निशीथे कीर्तनावसाने विदिततद्वृत्तश्च श्रीमद्गौरहरिः कालमेतावन्तं तदनिवेदनाद्दुःखराशिं प्रकाश्य शमन-सदनमाश्रयमाणस्य शिशोः शरीरं स्वसकाशमानाय्य तद्वदनप्रकाशिततत्त्वोपदेशराशिना सर्वान् सान्त्वयन् श्रीवासं प्रति नित्यानन्दमात्मानं च नित्यनन्दनत्वेन प्रतिपादया-मास । कदाचिच्च श्रीवासवाससमीपवासी तद्वस्त्रसीवन-सुकृतिशाली कश्चिद्यवनतुन्नवायः श्रीमन्महाप्रभोः कीर्तननृत्यलीलाविलासदर्शनेन सम्मुग्धमानसो बभूव । पश्चाच्च प्रभुणा तं प्रति निजस्वरूपे प्रकटिते सुभगशिरो-

मणिरहमपश्यमहमपश्यमिति प्राप्तप्रेमोन्मादोऽसौ नृत्य-
मारेभे। एकदा निशायां श्रीचन्द्रशेखराचार्यभवने भगवान्
श्रीगौरचन्द्रः स्वयं स्वीकृतरुक्मिणीसुवेषः श्रीमदद्वैत-
नित्यानन्दश्रीवासहरिदासैर्गृहीतविविधभाववेषविलासैरन्यै श्च
भक्तगणैर्वङ्गरङ्गभवने सर्वप्रथमं किमप्यभावनीयं लीला-
चरितमभिनिनाय। साम्प्रतं तु श्रीमद्विश्ववैष्णवराजसभासभा-
जनभाजनेन श्रीब्रह्ममाध्वगौडीयसंप्रदायैकरक्षकेण परमहंसा-
वतंसेन परिव्राजकवर्येणाष्टोत्तरशतश्रीभूषणेन श्रीमद्भक्ति-
सिद्धान्तसरस्वतीगोस्वामिमहाराजचरणेन विश्वायतविशुद्ध-
सनातनधर्मप्रचाराकरमठाधिराजः श्रीचैतन्यमठ इहैव
प्रतिष्ठामनायि। अन्येद्युर्नृत्यावसाने कयाचिद्विप्ररमण्या
स्पृष्टपादः श्रीगौराङ्गपादः प्राकृतसाहजिकानामवधानमुत्पा-
दयितुं गङ्गासलिले प्रविवेश। तदनन्तरं च श्रीनित्यान्द-
हरिदासादिभिस्तीरमानिन्ये। अथ कदाचिद्विप्रलम्भविग्रहे
कृतगोपीभावग्रहे श्रीमद्गौरसुन्दरे विरहदुःखभरविधुरे गोपी-
गोपीति नामपदान्युच्चारयति दुर्मतिः कश्चित् पाठशीलः
कृष्णनामपरिहारेण गोपीनामोच्चारणे कारणं पप्रच्छ।
तदानीं गापीभावविभावितमनसा श्रीगौरचन्द्रमसा तं

कृष्णदूतं मन्यमानेन श्रीकृष्णे सकोपं दोषराशिराविष्कर्तुमारेभे । ततश्च कोपकठोरः पाषण्डं दण्डेन ताडयामास । तच्छ्रुत्वा नवद्वीपनगरवास्तव्येषु ब्राह्मणब्रुवेषु महाप्रभुचरणं प्रहर्तुं विहितसंकल्पेषु स्वयमध्यापकान्तेवासिकर्मितापसमुखांस्तान् वैष्णवविद्वेषागसः परित्रातुमनाः सर्वप्रणम्यपदसंन्यासिपदं स्वीकर्तुं चतुर्विंशवर्षवयसि शेषप्राये माघशुक्लपक्षे पुण्योत्तरायणसंक्रमणदिवसे निशाशेषे नदियाघट्टे सुरधुनीसलिलमवतीर्य संतरणेन काटोयाजनपदं संप्राप्य कृपाप्रकाशमिषेणादौ तत्रत्यस्य श्रीमत्केशवभारतीचरणस्य श्रवणे संन्यासमनुं प्रदाय पश्चात्तन्मुखात्तन्मनुश्रवणं दण्डग्रहणचरितं च यथाविधानमाचचार। भगवान् श्रीगौरहरिस्तु श्रीकृष्णकीर्तनेनाचैतन्यविश्वस्य चैतन्यंसंचारयिष्यतीति तदानीं संन्यासलीलायामप्राकृतविशुद्धभारती श्रीमत्केशवभारतीरसनामवतीर्णा श्रीकृष्णचैतन्य इति वर्णराजिविराजितमस्य नामपदं वर्णयामास । श्रीमच्चन्द्रशेखराचार्यचरणैस्तु संन्यासविधिवेदितानि कृत्यजातानि संपादयांचक्रिरे । समुच्चरितविरहरोदनतारस्वरे निरन्तरहरिकीर्तनमुखरतरे दिग्दिगन्तरे

संप्राप्तपश्चिमगिरिशिखरे च भगवति दिवसकरे मुण्डनकृत्यं समाप्तं बभूव । ततश्च परवासरप्रभातमारभ्य भागवतीयामवन्तिनगरस्थत्रिदण्डिभिक्षुगाथामुच्चारयन् चरणसंचारणैराढधरणीं सुरनरवरणीयां विधातुमारेभे ॥

एवं च संन्यासिकुलधन्ये निखिलजगन्मान्ये श्रीकृष्णचैतन्ये दिवसत्रयं कृतपर्यटने कल्पितचातुर्येण श्रीमन्नित्यानन्देन शान्तिपुरप्रान्तगतायाः सुरधुन्याः परतीरं संप्रापिते वृन्दावनमार्गवीथिकाभ्रमणभ्रमेण पुण्यसलिलस्यन्दिनीं जन्हुनन्दिनीं कालिन्दीधिया सानन्दं वन्दमाने श्रीमदद्वैतप्रभुवरेण तरणिसमारोपणक्रमेण शान्तिपुरस्थं स्वभवनं च संप्रापिते तत्सहधर्मिणी श्रीमती सीतादेवी परमादरेण सेवार्थं विविधविचित्रसुरसभोज्यराशिं साधयामास । तदानीं श्रीनित्यानन्देन समुपविष्टेन श्रीगौरसुन्दरेण प्रसादसंमानार्थमामन्त्रितावपि श्रीमुकुन्दहरिदासौ दैन्यविग्रहौ प्रभुद्वयपङ्क्तौ नोपविविशतुरिति पश्चादद्वैतप्रभुस्ताभ्यां समं प्रकाममसृतोपमं श्रीमन्महाप्रभोः प्रसादशेषं जग्राह ॥

तदा शान्तिपुरनिवासाः सुकृतिनिवासाः सर्वे नवीनसंन्यासिवेषस्य श्रीमायापुरेशस्य चरणयुगलमशेष-कुशलैकमूलमतुलमीक्षितुमद्वैतनिलयमाजग्मुः । सायं च श्रीमुकुन्दप्रवर्तितनन्दनन्दननामगुणादिकीर्तनावसरे परमानन्दकलेवरे श्रीगौरसुन्दरे सात्त्विकभावकदंबकममन्दमदृश्यत । ततश्च नवद्वीपनिकेतनैर्भक्तगणैः श्रीशचीदेवी शिबिकया निशान्ते शान्तिपुरस्थमद्वैतनिशान्तमुपजगाम । एवं नवद्वीपनिवासैर्निजदासैः साकमद्वैतमन्दिरे दश वासरान् हरिनाम कीर्तनमहोत्सवपुरःसरमुषित्वा श्रीशचीदेवीं सान्त्वयन् तत्पक्वं भक्ष्यवस्तुजातं भैक्षत्त्वेन स्वीचकार । ततश्च लोकशिक्षकलीलावलीमभिनयन् भगवान् संन्यासि-समयसमुदयं प्रकटयितुं श्रीनवद्वीपवासिनां सकाशे गृहीत-संन्यासस्यात्मन आत्मजनसहवासानभिलाषं ज्ञापयामास । श्रीशचीदेवी च श्रीगौरसुन्दरस्य यथासुखं वासमाशासाना नीलाचलमलंकर्तुं वासनातिशयं प्रकाशमनयत् । ततश्च भगवान् श्रीकृष्णचैतन्यचरणः कृष्णनामगुणचरितकीर्तनादिभिः समयं गमयितुं श्रीशचीदेवीं नवद्वीपवासिनो भक्तगणांश्चोपादिश्य श्रीनित्यानन्दजगदानन्दमुकुन्ददामोदरैः

सह सत्रभोगमार्गानुसरणेन श्रीपुरुषोत्तमधामाभिमुखं प्रतस्थे। तदानीं पथि श्रीनामामृतवर्षणेन नानादेशान् प्लावयन् जीवदर्शनविघातककलुषरजोराशिमुपशमयन् श्रीकृष्णवैमुख्य-निदाघजातं सन्तापजातमपसारयन् विचेतनकल्पाननल्पान् मानवतरूंश्च समुज्जीवयन् श्रीकृष्णचैतन्यकारुण्यजलधरः क्रमेण वृद्धमन्त्रेश्वरमतीत्य सीमानमुत्कलराज्यस्य प्राप। रेमुनाजनपदे श्रीगोपीनाथपदमालोक्य भक्तेषु श्रीमदीश्वर-पुरीपादनिगदितं श्रीक्षीरचोरगोपीनाथमाधवेन्द्रपुरीचरणयो-श्चरित्रं विचित्रमुवाच। तदा च श्रीमाधवेन्द्रपुरीपादरचितम् "अयि दीनदयार्द्रनाथ" इत्यादिश्लोकभाषितं कीर्तयतस्तस्य विप्रलम्भभावोन्मादविलासः सविकासः समदृश्यत। तत्रैव च निशायामुषित्वा प्रातर्नीलाचलमभिगच्छन् पथि याजपुरमतिक्रम्य संप्राप्तकटकनगरस्तत्र श्रीसाक्षिगोपालदर्श-नान्ते श्रीनित्यानन्दप्रभुमुखात्तदाख्यानं शुश्राव॥

ततश्च भुवनेश्वरक्षेत्रे क्षेत्रपालं महेश्वरमालोक्य कमलपुरे भार्गीतीरे कपोतेश्वरशिवदर्शनार्थं श्रीमन्नित्यान्द-सकाशे स्वकीयं दण्डं संरक्ष्य गते श्रीमन्महाप्रभौ श्रीमन्नित्यान्दप्रभुपादस्तु स्वराट्पुरुषस्य भगवत आत्म-

दण्डविधानलक्षणेन दण्डेनालमिति धिया दण्डं खण्डशः कृत्वा भार्गीसलिले निचिक्षेप । तेन बहिःसंदर्शितकोपविलासेन संन्यासिवेषेण जगदीशेन भगवतः परमहंसवैष्णवानां चात्मदण्डविधानं निरर्थकमप्यनर्थयुक्तानां साधकानां कायमनोवाक्यदण्डं विना स्वातन्त्र्येण मङ्गलसद्भावराहित्यमिति तत्त्वमाविश्चक्रे । अष्टादशप्रवाहसमीपमागत्य च दण्डमप्राप्य प्रकाशितकोपकदुष्णभावः स्वयं सहचरान् पश्चात्कृत्वा श्रीजगन्नाथमन्दिरमुपजगाम । तत्र च देवं दृष्ट्वा प्रेमावेशवशे तमालिङ्गितुं धावमाने श्रीविग्रहे महाभावलिङ्गानि सविकासमासत । तदानीं तत्र गतेन सार्वभौमपदलाञ्छितेन तार्किकसभासभाजितमतेन वासुदेवभट्टाचार्यमहोदयेन तादृशं विचित्रप्रकाशं भावविलासं बाह्यदशासमधिगमविलम्बं च दृष्ट्वा जनसाहाय्येनासौ स्वगृहमानायि । सार्वभौमभगिनीपतिः श्रीगोपीनाथाचार्यमहोदयस्तु श्रीमुकुन्दान्महाप्रभोः संन्यासस्वीकारलीलां नीलाचलप्राप्तिं च तदानीं शुश्राव । ते च लोकपरंपराविदिततन्महाभाववृत्ताः श्रीनित्यानन्दप्रभुपादप्रमुखाः सर्वे सार्वभौमभवनमुपजग्मुः । ततश्च सार्वभौम-

नन्दनेन चन्दनेश्वरेण श्रीजगदीश्वरं प्रदर्श्य तेषु पुनः स्वनिलयं प्रत्यानीतेषु तृतीययामे श्रीगौरसुन्दरस्य बाह्यदशा समुदियाय। अनन्तरं लब्धतत्परिज्ञानेन सार्वभौमेन स्वमातृस्वसृभवने तेषां स्थानं निरणायि । ततश्च श्रीमन्महाप्रभोर्भगवत्त्वं विविध-प्रमाणोपन्यासपुरःसरं संस्थापयता भगिनीपतिना गोपी-नाथाचार्येण समं सशिष्यसार्वभौमस्य महान् वादः समजा-यत । परमेशस्य करुणाकिरणावलीविकिरणं विना भगवतो मरीचिमालिन इव स्वयंप्रकाशस्य तस्य स्वरूपनिरूपणाय नालं प्रमाणान्तराणीति विवादे गोपीनाथेनावादि । अथ सार्वभौमेन संन्यासिसामान्यधिया वेदान्ततत्त्वश्रवणे समुप-दिष्टः श्रीकृष्णचैतन्यस्ततः सप्त दिवसान् विहितमौन-स्तद्व्याख्यानमश्रौषीत् । संप्राप्ते चाष्टमदिने मौननिदानं पृष्टेन श्रीमन्महाप्रभुणा व्याससूत्राणां सुगमत्वेऽपि सार्व-भौमव्याख्यायमानशाङ्करभाष्यभाषितानां ब्रह्मसूत्रीयवास्तव-विमलार्थपिधायकत्वं वेदान्तविरुद्धत्वम् असुरमोहनत्वं च प्रतिपाद्य स्वयमचिन्त्यभेदाभेदसिद्धान्त एव वेदान्तप्रति-पाद्यत्वेनानल्पशास्त्रसंवादमुखेन प्रतिष्ठापदमनीयत । ततश्च प्राप्तपराजयः सार्वभौममहाशयः "आत्मारामाश्च मुनयः"

इत्यादिभागवतीयवचनव्याख्यानं शुश्रूषुस्तेनानुज्ञातस्तर्कज्ञानबलेन स्वयमेव प्रथमं नवधा व्याख्यां प्रणिनाय। अनन्तरं श्रीमन्महाप्रभुचरणेनाष्टादशसंख्यानेषु पृथग्व्याख्यानेषु विहितेषु प्राप्तचमत्कारः कृतात्मधिक्कारः पण्डितप्रवरस्तच्चरणयुगं शरणमियेष। तदानीं भगवता क्रमेण तं प्रति चतुर्भुजे द्विभुजे च विग्रहे संप्रकाशिते प्राप्ततत्त्वाधिगमेन सार्वभौमेन श्लोकशतकेनाचिरकल्पितेन तद्वन्दनं विदधे। एकदा च प्रातःकृत्यात् प्रागेव प्रभुणा प्रदत्तं श्रीमज्जगन्नाथप्रसादान्नं सम्मानयन् सार्वभौमपादः स्वस्य स्मार्तमतानुरागनिर्मुक्तिं प्रकाशयामास। अन्यदा च सर्वोत्तमं साधनाङ्गं परिपृष्टः श्रीमन्महाप्रभुः सार्वभौमाय नामसंकीर्तनमुपदिदेश॥

कदाचिच्च भट्टाचार्यप्रवरेण "तत्तेऽनुकम्पाम्" इत्यादिश्लोके 'मुक्तिपद' इति पाठविपर्यासेन समञ्जसतया 'भक्तिपद' इति पाठे श्राविते भागवतीयभाविते पाठविपर्यासमनभिलषता भगवता कृष्णचैतन्येन 'मुक्तिपद' शब्दस्य कृष्णवाचकत्त्वमवोचि। अनन्तरं च सार्वभौमपादस्य वैष्णवपदाधिगतिमालोक्य नीलाचलनिवासिनः सर्वे

श्रीकृष्णचैतन्यं स्वयं कृष्णात्मकं विदुः । काशिमिश्रप्रमुखाश्च तच्चरणशरणत्वमाययुः । एवं च माघे मासि संन्यासं फाल्गुने नीलाचलवासं चैत्रे च सार्वभौमे कृपाप्रकाशमभिनीय भगवता श्रीकृष्णचैतन्येन भक्तजनसाहचर्यं विनैव माधवे दक्षिणपर्यटनं स्वीचक्रे । पश्चाच्च श्रीमन्नित्यानन्दपादस्य निर्बन्धातिशयेन कृष्णदासनामानमकपटमानसं विप्रनन्दनमनुचरत्वेनानुमेने । सार्वभौमश्च कौपीनबहिर्वसनचतुष्टयं समर्प्य गोदावरीरोधसि श्रीमद्रामानन्दरायमहोदयं साक्षात्कारप्रदानेन कृतार्थयितुं प्रभुवरचरणे तदभिलाषनिवेदनं चकार । ततश्च श्रीकृष्णचैतन्यचरण आलालनाथक्षेत्रं यावत् कृतानुसरणान् श्रीमन्नित्यानन्दप्रभुप्रमुखाननुचरवरान् परिहृत्यानुगतकृष्णदासः कृष्ण कृष्णेति भाषमाणः सततं कृष्णभावविलासावेशभूषितमानसः श्रीनामश्रवणानुकृतनामग्रहणान् दक्षिणदेशनिकेतनान् शरणागतान् वैष्णवपदे संस्थाप्य श्रीनवद्वीपादपि कृपावारिवितरणं तत्राधिकतरं चकार । एवं क्रमेण कूर्मक्षेत्रमुपेत्य कृतवन्दनं कूर्मविप्रनन्दनमनुगृह्य कृष्णनामप्रचारमुपदिश्य कूर्मभवने कुष्ठामयगलत्कलेवरस्य वासुदेवनामधेयस्य ब्राह्मणस्य शरीरसंसाररोगौ

युगपदपहरन् आचार्यत्वं च तस्य प्रचारयन् स्वयं वासुदेवामृतप्रद इत्यभिधानवरं स्वीचकार। ततश्च स 'जीयरनृसिंह' मवलोक्य गोदावरीतीराददूरे विद्यानगरे तीर्थाभिषेकाभिलाषेण विराजमानं रामानन्दनामानं रायोपनामानं महात्मानं ददर्श। तेन च सारङ्गवरेण कतिपयवासरान् विद्यानगरे हरिनामामृतवारिवितरणं याचितः श्रीकृष्णचैतन्यचरणवारिधरः कस्यचिद्वैदिकधरणीसुरस्य मन्दिरमम्बरमिवालंचकार। दिनान्ते च दीनवदुपेतं विहितदण्डवद्वन्दनं रायरामानन्दं प्रभुवरः साध्यनिर्णयश्लोकान् पप्रच्छ। तेन च वर्णाश्रमधर्माचरणसहकृतं कर्मसमर्पणमासक्तिरहितकर्माचरणं ज्ञानमिश्रभजनं ज्ञानगन्धरहितं शुद्धभजनं च क्रमादुल्लिख्य पठितेषु श्लोकेषु श्रीमन्महाप्रभुरन्तिममेव साध्यत्वेन स्वीचकार। अनन्तरमप्यधिकारिविशेषनिष्ठं भजनवैशिष्ट्यं पृष्टेन रामानन्दपादेन क्रमाद्विशुद्धकृष्णरत्यात्मकप्रेमभक्तिं दास्यप्रेम सख्यप्रेम वात्सल्यप्रेम च समुल्लिख्य कान्तभावगतं प्रेमैव साध्यसारत्वेनावादि। पश्चाच्च श्रीमन्महाप्रभौ तस्यापि साध्यपराकाष्ठानिष्ठत्वमनङ्गीकुर्वति महामतिरसौ रससिन्धुसम्मन्थनेन श्रीराधाप्रेमामृतमेव परमसाध्यसारत्वे-

नाविष्कुर्वन् प्रसङ्गाद्राधाकृष्णयोः स्वरूपं रसतत्त्वं प्रेमतत्त्वं च निरणैषीत् ॥

अनन्तरं च श्रीरामानन्दः प्रेमविलासविवर्तात्मकः विप्रलंभगताधिरूढभावमयं संगीतमेकं प्रभुवरं श्रावयामास । ततश्च श्रीराधाकृष्णप्रेमसेवात्मकपरमसाध्यतत्त्वाधिगतेरुपायत्वेन श्रीव्रजसखिजनानुगत्यं विवृतं बभूव । एवं च रहसि कृष्णालापप्रसंङ्गेन समतीतासु निशासु कतिपयासु कदाचित् कृष्णचैतन्येन प्रकटिते रसराजमहाभावरूपे श्यामगौररूपे स्वरूपे रामानन्द आनन्दसंदोहेनामन्देन मूर्छामवाप । कतिपयदिवसानन्तरं च तं राजकृत्यपरिहारेण पुरुषवरक्षेत्रं गन्तुमादिश्य श्रीमन्महाप्रभुर्दक्षिणां दिशमभिप्रतस्थे । तत्र च स विद्यानगरात् क्रमेण गौतमीगङ्गां मल्लिकार्जुनमहोबलनृसिंहं सिद्धवटं स्कन्दक्षेत्रं त्रिमटं वृद्धकाशीं बौद्धक्षेत्रं त्रिपतिं त्रिमल्लं (वेंकटाद्रिं) पानानृसिंहं शिवकाञ्चीं विष्णुकाञ्चीं श्रीकालहस्तिपदं वृद्धकोलं शृगालभैरवीपदं पक्षितीर्थं कावेरीतीरं कुम्भकर्णकपालं (कुंभघोणं) चातीत्य श्रीरङ्गपदमाजगाम । तदा प्रभुवरानुकम्पया दक्षिणदेशवासिनां कर्मिज्ञानितत्त्ववादिरामोपास-

कादीनां कृष्णभजने रतिरजनि । बौद्धपदे च शास्त्रविवादे पश्चात्पदेन दुरभिसंधानेन बौद्धाचार्येण महाप्रसादत्व-ख्यापनेनामेध्यान्ने समर्पिते दैवात् परापतितेन महाकलेवरेण विहगवरेण तत्पात्रमुल्लीय निपातितं बौद्धगुरोः शिरोविदारणं चकार । तेन हतचेतने तस्मिन् शरणा-गताः सौगताः भगवतः प्राप्तानुमताः कृष्णसंकीर्तनेन सगुरोर्वैष्णवत्वमीयुः । बौद्धाचार्यश्च कृष्णधिया तं सानन्दमवन्दत । एवं च श्रीकृष्णचैतन्यदेवः शैवानपि वैष्णवत्वरूपं स्वरूपमानिनाय । श्रीरङ्गक्षेत्रे च तद्देश-वासिनो रामानुजीयवैष्णववरस्य वेङ्कटभट्टस्य भवने चातु-र्मास्यसमयं यथासमयं यापयन् त्रिमल्लभट्टवेङ्कटभट्टप्रबोधा-नन्दसरस्वतीनामधेयं सहोदरत्रयं सपरिवारं श्रीलक्ष्मी-नारायणाराधनपरं कृष्णसेवारससागरनिमज्जनचतुरं चकार । तदानीं वेङ्कटभट्टस्य नन्दनस्त्रिदण्डिसंन्यासिनः श्रीप्रबो-धानन्दसरस्वतीपादस्य भ्रातुष्पुत्रः शिष्यश्च श्रीमद्गोपाल-भट्टः श्रीमन्महाप्राभोः साक्षात्कारं सेवारसं च लेभे ॥

ततश्च प्रभुवरः ऋषभपर्वतमुपेत्य श्रीमत्परमानन्द-पुरीपादेन प्राप्तः सेतुबन्धमभिप्रतस्थे । पुरीपादश्च

श्रीपुरुषोत्तमपादपद्मदर्शनाभिलाषस्तदभिमुखं ययौ ॥

दक्षिणमथुरायां च श्रीरामसेवकं भूसुरमेकं श्रीसीतायाः निकषासुताद्विग्रहमाकर्ण्य समधिगतमानससन्तापातिरेकमवलोक्य श्रीमन्महाप्रभुरप्राकृतवैकुण्ठाधीश्वर्यास्तस्याः प्राकृतासुररावणदर्शनस्पर्शनानर्हत्वं प्रतिपादयन् सान्त्वयामास । पश्चाच्च रामेश्वरात्तत्प्रमाणं कूर्मपुराणवचनमानीय तमदर्शयत् । मालवर (केरल) प्रदेशे भट्टथारिगणैर्विमुह्यमानमानसं कृष्णदासं समुद्धार्य कृष्णसेवाविमनस्कानां मायावश्यत्वमवश्यंभाव्यमिति तत्त्वमशिक्षयत् । ततश्च पयस्विनीतीराद्ब्रह्मसंहितायाः पञ्चमाध्यायं संगृह्य शृङ्गेरिमठं निरीक्ष्य प्रभुवर उडुपीक्षेत्रं जगाम । तत्र च तेन शास्त्रविवादे तत्त्ववादी तदानींतनो मध्वाचार्यः कर्मज्ञानमिश्रां भक्तिं प्रतिपिपादयिषुः प्राप्तनिग्रहस्तन्महिमानं मानयामास ॥

पाण्डरपुरे च प्रभुवरः श्रीरङ्गपुरीमुखात् श्रीशङ्करारण्यस्य (अग्रज विश्वरूपस्य) वैकुंठविजयसंदेशं शुश्राव । ततश्च कृष्णवेण्वातीरात् कृष्णकर्णामृतं काव्यवरं संगृह्य

विद्यानगरं प्रत्यावृत्य रामानन्दं दर्शनदानेन सानन्दं कृत्वा स्वयमालालनाथमार्गेण श्रीपुरुषोत्तमपदं प्रपेदे । तत्र च काशीमिश्रभवनमाश्रिते श्रीकृष्णचैतन्ये सार्वभौमः श्रीक्षेत्रवासानां विष्णुदासानां परिज्ञापनमकार्षीत् । कृष्णदासे च गृहीतप्रभुनिदेशे नवद्वीपमुपागते तन्मुखान्महाप्रभोः श्रीक्षेत्रप्रत्यावर्तनमाकर्ण्य गौडीयभक्तमहोदयास्तद्धाम गमनाय कृतयत्ना बभूवुः । श्रीपरमानन्दपुरीपादश्च श्रीमदद्वैतानुगतं विप्रं कमलाकान्तमादाय पुरुषोत्तमपदमियाय । नवद्वीपनिवासी श्रीपुरुषोत्तमभट्टाचार्यश्च काशीधामतश्चैतन्यानन्दनामधेयाद्गुरोः स्वीकृतसंन्यासोऽगृहीतयोगपट्टादिकश्च स्वरूप इत्यभिधानेन परिज्ञातस्तदा प्रभोश्चरणप्रान्तमाजगाम । श्रीमदीश्वरपुरीचरणशरणः श्रीमद्गोविन्दोऽपि गुरुपादानां वैकुण्ठप्रयाणलीलानन्तरं तत्पूर्वादेशान्महाप्रभोः सेवायां निवेदितात्मा बभूव । श्रीमदीश्वरपुरीपादाश्रयः पण्डितवरः काशीश्वरश्च पुरीमागत्य प्रभुवरं शरणं प्रपेदे । प्रभुपादानां कौशलेन ब्रह्मानन्दभारतीमहाशयेनाप्यजिनवसनविहीनेनाभावि । सार्वभौमे च तदानीं प्रभुपादे महाराजस्य प्रतापरुद्रस्य संगमं

कामयमाने जगद्गुरुवरलीलामभिनयता भगवता विषयिदर्शने संन्यासिनां प्रतिषेधं प्रकाशयता तन्मतमस्वीचक्रे। पश्चाद्गृहीतराजकृत्यावसरे रामानन्दरायवरे समेत्य समुच्चारिततद्गुणनिकरे भद्रसमुद्रं प्रतापरुद्रं प्रति महाप्रभोर्मानसमनुरागसरसमासीत्। ततश्च समायाते जगन्नाथदर्शनानवसरसमये स्वयमालालनाथमुपेत्य प्रत्यागतस्य पुरुषोत्तमपदे गौडदेशात् कृतसन्निधानैरद्वैतप्रधानैरात्मजनैः संगतिरजायत। महामतिः प्रतापरुद्रश्च गौडीयभक्तानामवस्थितिमहाप्रसादप्राप्त्यादेरुपायव्यवस्थां सम्यगकरोत्। सायं च सम्प्रदायचतुष्टयविभागपुरःसरं श्रीजगन्नाथमन्दिरे महासंकीर्तनसमारम्भे श्रीनित्यानन्दप्रधानेन भक्तवृन्देन प्रतापरुद्रस्य प्रभुसंदर्शनार्थिन आर्तिजातं निवेदितम्। पश्चाच्च राज्ञः सान्त्वनार्थं युक्तिमाविष्कुर्वता श्रीमान्नित्यानन्देन प्रभुपरिहितं बहिर्वसनखण्डमेकं तस्मै प्रददे। ततश्च रामानन्दमहोदयस्य निर्बन्धातिशयेन समीपं प्रापितं राजनन्दनं नन्दनन्दनधिया प्रभुवर आलिलिङ्ग। महाराजश्च लब्धप्रेमावेशं स्वसुतं स्पृष्ट्वा प्रभुकृपाधिगमात् प्रेमाणमलभत। समागतप्राये च रथयात्रासमये भक्तगण-

परिवृतः प्रभुवरः स्वयं गुण्डिचामन्दिरमार्जनलीलाविलासमाविश्चक्रे । तदा च कश्चिद्गौडीयः प्रभोः पादोदकं पपौ । भगवन्मन्दिरे जीवस्य पदक्षालनं सेवापराधत्वेन ज्ञापयितुं जगद्गुरुवरस्तं गौडीयं गौडीयेश्वरेण स्वरूपदामोदरेण गुण्डिचामण्डलादपसारयामास । ततश्च भक्तैः सह देवस्य नवयौवनोत्सवमपश्यत् । ततश्च श्रीजगन्नाथस्य पाण्डुविजयदर्शनसमये सुवर्णसम्मार्जनीं दधतः प्रतापरुद्रस्य रथगमनमार्गशोधनात्मकं दैन्यविलसितं देवसेवनमालोक्य तं प्रति प्रसादाक्रान्तचेता बभूव ॥

तदा च श्रीगौरसुन्दरः सभक्तवृन्दः सप्तमण्डलकल्पनेन सानन्दं स्यन्दनाग्रे ताण्डवं कीर्तनं च कुर्वन्नैश्वर्यमदर्शयत् । ततश्च बलगण्डिनामकोपवने विश्रामसमये प्राप्तप्रेमावेशं प्रभुवरं वैष्णववेषः पादसंवाहनेन सेवमानः प्रतापरुद्रः समयोचितं श्रीभागवतश्लोकभाषितं पठन् प्रेमालिङ्गनं लेभे । ततश्च राज्ञस्तादृशं वैष्णवसेवानिर्बन्धातिशयं दृष्ट्वा श्रीमन्महाप्रभुणा तस्मिन् कृपा वितेने । अथ सुन्दराचलमलङ्कुर्वाणे श्रीमज्जगदीशे प्रभोर्वृन्दावनविलासस्फूर्तिरजा-

यत । नवरात्रयात्रायां जगन्नाथवल्लभोद्यानमाश्रित्य हेरापञ्चमीलीलामवलोक्य श्रीवासपण्डितस्वरूपदामोदराभ्यां साकं लक्ष्मीगोपीस्वभावविषयकमिष्टसंवादं बहुधा चकार। पुनर्यात्रावसरे कीर्तनाद्यवसाने प्रभुवरः कुलीनग्रामवासिनं श्रीमन्तं सत्यराजखान महोदयं रामानन्दवसुमहोदयं च प्रतिवर्षं रथयात्रायां पट्टरज्जुसंग्रहार्थमादिदेश । रथयात्रावसाने श्रीमदद्वैतप्रभुणा कुसुमतुलसीपत्राभ्यामर्चितः स्वयमपि पात्रस्थितशेषपुष्पतुलसीदलाभ्याम् 'योऽसि सोऽसि' इत्यादिमन्त्रेण तमानर्च । ततश्च श्रीमदद्वैतेन निमन्त्रितो बुभुजे । नन्दोत्सवदिवसे धृतगोपवेषः सपरिकरो विविधानन्दविलासानदर्शयत् । विजयादशमीवासरे च लङ्काविजयोत्सवावसरे भक्तवरान् वानरवीरान् कल्पयन् स्वयं हनुमदावेशवशः सम्मदराशिमनुबभूव । एवं विविधयात्रामहोत्सवदर्शनावसाने रामदासगदाधरदासादीन् भक्तान् गौडदेशं प्रेरयामास । श्रीमन्नित्यानन्दं च तत्र प्रेमामृतप्लावनं विधातुं श्रीमदद्वैतपादं च कृष्णभजनमाचण्डालं प्रचारयितुमादिदेश । श्रीवासकरे च स्वदीनभाषितं श्रीशचीदेव्याः प्रसादवसनादीनि समर्पयामास ।

पण्डितं श्रीराघवं दत्तठक्कुरं श्रीवासुदेवं कुलीनग्राम-निवासान् वैष्णवांश्च बहुधा प्रशस्य विससर्ज ॥

रामानन्दसत्यराजाभ्यां पृष्टश्च गृहस्थवैष्णवानां शुद्धनामपरायणवैष्णवसेवामेव श्रेयःसाधनत्वेनादिशत् । खण्डवासिनां च भक्तानां सेवानुरूपं माहात्म्यं निर्दिश्य सार्वभौमं विद्यावाचस्पतिं च दारुमयस्य सलिलरूपस्य च ब्रह्मणः सेवनमुपदिदेश । ततश्च गुप्तवरस्य श्रीमन्मुरारेः श्रीरामचरणपरिचरणपरायणत्वमुल्लिख्य श्रीमद्वासुदेवदत्तठक्कुरेण दैन्यविनयाद्यशेषवैष्णवगुणधरेण यथावसरं जिज्ञासितः श्रीकृष्णस्य विनायासं जगदुद्धारकत्वं निरणैषीत् । सार्वभौमनिशान्ते च भिक्षां चरन्तं प्रभुं प्रति तज्जामातुरमोघस्य दुर्भावोदय आसीत् । परदिवसे च प्रातरसौ विषूचिकामयपीडितः प्राणैः परिहीयमानः प्रभुप्रसादेन पीडाया उपशान्तिं कृष्णनामप्रीतिं च प्राप ॥

एवं च यथास्थानं गताः श्रीमदद्वैतादयो गौडीयास्तृतीयहायने पुनः श्रीशिवानन्दसेनमहोदयस्यानुकूल्येन प्रभुपददर्शनार्थं नीलाचलमीयुः । तैः समं समागतः

सेनमहाशयस्य कश्चित् सुकृतिशाली सारमेयः प्रभोश्चरणयुगं दृष्ट्वा कृतोच्छिष्टसेवनः सद्गतिमवाप । रथयात्रा-महोत्सवे च प्रभुवरः सपरिकरः पूर्ववद्रथाग्रे नृत्यन् गुण्डिचामार्जनविलासं च विदधे । ततश्च कुलीनग्राम-वासिभिः पृष्टः सान्तरं हरिनामान्युच्चारयन्तं वैष्णवत्वेन निरन्तरं तथा कुर्वन्तं वैष्णवतरत्वेनात्मदर्शनदानेन परमुखे हरिनामान्याविर्भावयन्तं च वैष्णवतमत्वेनोपपादामास । ततश्च गृहीतानुमतेषु स्वदेशान् गतेष्वनुगतेषु विजया-दशम्यां प्रभूत्तमः पुरुषोत्तमपदाद्वृन्दावनमभिप्रतस्थे । रायरामानन्दश्च भद्रकं यावत् तमनुससार प्रभुविरह-कातरः पण्डितवरः श्रीमद्गदाधरश्च धामवासात्मकं क्षेत्र-संन्यासमकातरं परिहरन् कटकान्तमनुसरन् पुनरचिरं नीलाचलप्रत्यागमनं शपथपुरःसरं प्रकाशयता प्रभुवरेणैव सार्वभौमभट्टाचार्यसाहचर्येण पुरुषोत्तमपदं प्रेरयांचक्रे ॥

अनन्तरमुड्रदेशसीमानं समेत्य संप्राप्तयवनाधिकारि-साचिव्यस्तरणिमाश्रित्य पाणिहट्टे राघवपण्डितागारं ततश्च कुमारहट्टे श्रीवासनिवासपदमाराच्च श्रीशिवानन्द-मन्दिरं पश्चाच्च विद्यानगरस्थं वाचस्पतिप्रवरालयमलंकृत्य

जनैरलक्ष्यमाणः कोलद्वीपं प्राप्तः श्रीवासचरणे कृतागसं पण्डितं देवानन्दं चापालगोपालं च वैष्णवापराधदवदहनात् सदयोदकाभिषेकमुद्दधार । तदेव कोलद्वीपमधुना नवद्वीपनगर अपराधभञ्जनपदम् इति च परिगीयते । कोलद्वीपात् श्रीमन्महाप्रभुः श्रीरामकेलिक्षेत्रं जगाम ॥

तदानीं गौडदेशाधिपतेर्यवनकुलधुरन्धरस्य बादशाहहुसेनसाहस्य राष्ट्रचक्रपरिचालने प्रबलबलं बाहुयुगलमिव दबरिखासः साकरमल्लिक इति सहोदरयुगलमासीत् । यवनेश्वरश्च दबरिखासमुखादवगतमाहात्म्यनिकरं प्रभुवरं जगदीश्वरममन्यत । तत्र च श्रीनित्यानन्दहरिदासश्रीवासगदाधरमुकुन्दजगदानन्दमुरारिवक्रेश्वरमुखाः भक्ताः सहचरा आसन् । प्रभुवरस्तदा दबरिखासं साकरमल्लिकं च नित्यकिंकरत्वेन स्वीचकार । तयोश्च यथाक्रमं श्रीरूपः श्रीसनातन इति चाभिधानं बभूव । ततश्च श्रीसनातनसुभाषितानुसारिणा परिहृतबृन्दावनगमनवासनेन प्रभुणा कानाइनाटशालामार्गेण पुनः शान्तिपुरपदं स्वपदसंचारेण पुण्यास्पदं चक्रे । सप्तवासरांश्च तत्र श्रीमदद्वैतमन्दिरमलंकुर्वन्नात्मविरह-

विधुरां मातरं परिसान्त्वयन् सप्तग्रामनिवासस्य श्रीमद्गोवर्धनदासस्य सुतवरं निजनित्यकिंकरं श्रीमद्रघुनाथं नाथविरहकातरं गृहगमनमादिश्य जगति वैराग्यादर्शमदर्शयत् । शान्तिपुराच्च भट्टाचार्यबलभद्रपण्डितदामोदराभ्यां सहचराभ्यां पुरुषोत्तमपुरीमाजगाम ॥

ततश्च कियत्कालानन्तरं बलभद्रसद्वितीयः स्वयं झारिखण्डकाननमार्गेण खगमृगादीनपि हरिनामकीर्तननर्तननिरतान् विधाय काशीं समेत्य विश्वेश्वरबिन्दुमाधवदर्शनान्ते काशीवासिनस्तपनमिश्रपादस्यालयमलंचकार । मिश्रनन्दनश्रीरघुनाथश्च तदानीं प्रभोश्चरणयुगपरिचरणे प्रसादग्रहणे चावसरं लेभे । स एवोत्तरकालं प्राप्य श्रीमद्रघुनाथभट्टगोस्वामीति ख्यातिमवाप । मिश्रवरः कश्चिन्महाराष्ट्रीयो महीसुरश्च तदा श्रीगौरसुन्दरचरणारविन्दे काशीवासिनां मायावादहलाहलकवलितत्वं मायिसंन्यासिगुरोः प्रकाशानन्दस्य च प्रभुनिन्दनं दुःखसन्तप्तमनसा निवेदयामास । श्रीमन्महाप्रभुश्च भक्तेषु मायिनामायतिमतिभयदायिनीं प्रकाशयन् तानुपेक्ष्य महाराष्ट्रीयं विप्रवरं चानुगृह्य दिवसचतुष्टयान्ते प्रयाग-

भूमिभागमगात् । तत्र च कालिन्दीमालोक्य व्रजलीलाविलासरसोद्दीपनात्तत्सलिले विगतकलेवरस्मृतिर्निपतितः श्रीबलभद्रेण तीरमानायि । प्रयागे दिवसत्रयमुषित्वा कृष्णनामप्रेमामृतवितरणेन तत्तद्देशनिवासिनां विषयपिपासामशेषां सुचिरं विनाशमासादयन् मथुरामुपेत्य तत्रास्पृश्यसलिलसानोडीयाविप्रकुलप्रसूतेन श्रीमन्माधवेन्द्रपुरीपादानुगतेन केनचिन्महासुकृतेन निष्पादितमन्नजातं भैक्षत्वेनाङ्गीकृत्य शुद्धवैष्णवसमयमशिक्षयत् । एवं श्रीगौरसुन्दरः श्रीवृन्दावने चीरघट्टे प्रतिदिनं कृष्णलीलाकालीनतिन्तिडीतरुतलमलंकुर्वन् मध्याह्नकालं यावत् संख्यानामकीर्तनलीलां समागतेषु नामकीर्तनोपदेशं च चक्रे । अक्रूरतीर्थे कृष्णदासाभिधानः कश्चित् क्षत्रनन्दनः प्रभोर्लब्धप्रसादः संसारधर्मेषूदासीनस्तदवधि तस्य कमण्डलुवाहकः सहचरो बभूव । वृन्दावने प्रभोः प्रेमोन्मादलीलाविलासं कालक्रमेणातिप्रकाशमवलोक्य बलभद्रस्तं व्रजमण्डलात् प्रयागं नेतुमभिललाष । ततश्च प्रभुवरः सोरोक्षेत्रे भागीरथीतीर्थाभिषेकं ततः प्रयागगमनं चोद्दिश्य क्षत्रियकृष्णदासं सानोडियाविप्रसुतं बलभद्रं

तत्सहचरं ब्राह्मणं च सहकृत्य प्रतस्थे । तदागमनमार्गे धेनुगणसंचरणं गोपवदननिनादितवेणुनिस्स्वनं चोपलभ्य समुदितव्रजगोपाललीलास्मरणे श्रीप्रभुचरणे प्रेममूर्च्छाविलासमाचरति तत्र बिजलीखाँभिधानः पाठानकुलजः सादिबलाधिपतिर्महाबल आजगाम । एतैरेवानुचरैर्धनापहरणार्थं कृतधूस्तूरप्रयोगैरयं मूर्छामासादित इति सादिपतिर्विहितमतिः प्रभोः सहचरान् बबन्ध । ततश्च बाह्यदशामापन्नः श्रीमन्महाप्रभुस्तत्सङ्गस्थितेन केनचिद्यवनशास्त्रविदुषा शास्त्रविवादमाचरन् कोराणाख्ययवनधर्मशास्त्रवचनैरेव कृष्णभजनं जीवनित्यैककृत्यतया समस्थापयत् । अथ यवनशास्त्रगुरुः शरणागतः प्रभुवरेण विहितसंस्कारो रामदास इत्यभिधानं दधौ । सादिनश्च सर्वे सनायकाः प्रभोरनुग्रहेण संजातकृष्णभजनाग्रहाः पाठानवैष्णवा इति प्रथिता बभूवुः ॥

सोरोक्षेत्रे गङ्गायां स्नात्वा श्रीमद्गौरसुन्दरस्त्रिवेणीपदं प्रपेदे । तत्र प्रयागे दशाश्वमेधघट्टे राजकृत्यगृहादिवैभवासक्तिविमुक्तेन श्रीरूपपादेन प्रभोः संगतिरजायत । श्रीवल्लभभट्टश्च तदन्तरे कदाचित् प्रभुवरं निमन्त्र्य

स्वभवने भिक्षां कारयन् सपरिवारः पादोदकस्वीकारपुरःसरमानर्च । प्रभुणापि श्रीरूपवल्लभयोः परस्परं परिज्ञानं संपादितमासीत् । ततश्च त्रिहूतनिवासेनोपाध्यायवरेण रघुपतिना रससंवादो बभूव । एवं प्रयागे दश वासरान् निवसन् दशाश्वमेधघट्टे श्रीरूपे रहसि स्वशक्तिसंचारं कृत्वा सूत्राकारेण भक्तिरसतत्त्वमुपदिश्य तं रसामृतसिन्धुप्रणयनार्थमादिदेश । ततश्च तं वृन्दावनं प्रापय्य स्वयं वाराणसीं समेत्य चन्द्रशेखरभवने वासमकार्षीत् । श्रीसनातनश्च विविधचातुर्यचर्यया राजकार्याल्लब्धावसरः काश्यां चन्द्रशेखरमन्दिरे प्रभुचरणाश्रयमियाय । तेन च जीवानां स्वरूपसाधनप्रयोजनविषयकान् परिप्रश्नान् कारयता भगवता स्वयमुत्तरत्वेन प्रकाशितं सुभासितजातमिदानीमपि श्रीसनातनशिक्षानाम्ना संप्रथितं मानवकुलं त्रितापाकुलं भवसलिलनिधेरपरं कूलमलं संगमयति ॥

अथ वाराणसीनिवासिनां मायिसंन्यासिनामुद्धारं कामयमानैर्भक्तगणैरनुनीयमानः कदाचिन्महाप्रभुर्महाराष्ट्रीयविप्रभवने गुरुणा प्रकाशानन्देन सह तान् संप्राप्य सदैन्यमैश्वर्यं प्रकटयन् मुग्धमानसांश्चकार ।

ततश्च मायावादसिद्धान्ते भ्रान्तिनिचयमनन्तं प्रदर्श्य श्रीकृष्णनाममाहात्म्यमनुत्तममभाषत । तेनं च तत् संन्यासिकुलं प्रभोरनुग्रहेण मायावादग्रहग्राहग्रासनिर्मुक्तं बभूव । अनन्तरमेकदा बिन्दुमाधवमन्दिरे भक्तवृन्दैः कीर्तनानन्दममन्दमनुभवति श्रीगौरसुन्दरे श्रीमत्प्रकाशानन्दस्तत् पदारविन्दे पतन् स्वस्य पूर्वकर्माणि धिक्कृत्य । वेदान्तसंमतं भक्तितत्त्वं पप्रच्छ । तदा प्रभुरपि ब्रह्माम्नायप्राप्तं भक्तिसिद्धान्तं कीर्तयन् श्रीमद्भागवतमेव ब्रह्मसूत्रस्य भाष्यभाषितमकैतवोद्भासितमित्यदर्शयत् । ततश्च श्रीसनातनं बृन्दावननिकेतनं विधाय स्वयं नीलाचलं चचाल । अथ बृन्दावनादागत्य पुरुषोत्तमधामनि ठक्कुरहरिदासेन साकं कृतनिवासेन श्रीमद्रूपगोस्वामिना विरचितं "प्रियः सोऽयम्" इत्यादिश्लोकभाषितमाकर्ण्य परमानन्दमविन्दत । अन्यदा च तत्प्रणीतयोर्ललितमाधवविदग्धमाधवाख्ययोर्नाटकयोनान्दीवचनादीनि शुश्राव । कदाचित् गृहीताचार्यादेशः कनिष्ठहरिदासः श्रीगौरसुन्दरस्य सेवार्थं वृद्धायाः माधवीदेव्याः सकाशात्तण्डुलं भिक्षयामास । तेन च भगवता जगत्यां विरक्त-

वैष्णवकुलसमयं शिक्षयितुं प्रकृतिसंभाषणागसा तस्य द्वारप्रवेशं निषिध्य परिवर्जनलीलामभिनिनाय । तद्दुःखेन संवत्सरावसाने भक्तवरः प्रयागसलिले कलेवरं तत्याज । श्रुतवृत्तेन प्रभुणापि तदा प्रकृतिसंभाषिणस्तदेव प्रायश्चित्तमुत्तमत्वेनानुमेने ॥

श्रीहट्टनिवासी श्रीमत्प्रद्युम्नमिश्रः कदाचित् कृष्णकथामृतरसं पिपासुः सन् प्रभुणा श्रीरामानन्दसकाशं प्रेषित आसीत् । तत्र च महाभागवतं परमहंसं रागभक्तिविलासं रायमहोदयं देवदासीवृन्दाय नृत्याभिनयमुपदिशन्तमाकर्ण्य विहतश्रद्धः प्रत्याजगाम । प्रभुरपि तदानीमचिन्त्यभावविलसितं रायवरचरितं व्याख्याय कृष्णतत्त्वशुश्रूषुं मिश्रपादं तदाश्रितं चकार । विरुद्धतत्त्वं रसाभासात्मकं वा वाक्यं कदापि न श्रीमद्गौरसुन्दरस्य प्रीतिहेतुरासीत् । तस्माद्भक्तिसिद्धान्तविदुषा श्रीमद्दामोदरेणादौ सुपरीक्षितमनुमतं च काव्यजातं स्वयं शुश्राव । विप्रलम्भभावसिन्धोरुद्वेलदशायां स्वरूपरामानन्दाभ्यामेव निरन्तरमस्य स्वरूपस्थितिर्विदधे । तदा पुरुषोत्तमपदं प्राप्तः श्रीमद्रघुनाथदासमहोदयः प्रभुणा स्वरूपस्य रघुरित्या-

ख्याय स्वरूपकरे समर्पयांचक्रे । अथ प्रभुवरेण परम-
प्रेष्ठाय निखिलब्रह्मज्ञश्रेष्ठाय रघुनाथाय स्वस्य श्रीगिरि-
धारिविग्रहः श्रीगान्धर्वात्मिका गुञ्जामाला च ददे ।
विरक्तकुलमौलिमणिः श्रीरघुनाथश्च योगक्षेमविधानं
भगवद्भजनकालविघातकं मत्वा देवालये परिहृतं
पर्युषितं पङ्कलिप्तं प्रसादान्नमेव सलिलेन प्रक्षाल्य
तेनैव यथाकथञ्चिद्देहयात्रां स्वीकृत्य निरन्तरं भगव-
द्भजनमेव तन्मयत्वेनारेभे । तेन कदाचिदतिप्रीतमानसः
प्रभुवरः स्वरूपेण सह तत्संगृहीतं प्रसादान्नं बलादा-
कृष्य बुभुजे । एकदा रथयात्रोत्सवात् पूर्वं श्रीमद्वल्लभ-
भट्टः पुरुषोत्तमपदं समेत्य प्रभोः पदयुगं ववन्दे ।
प्रभुणा तद्गर्वविनाशाय पुरत एवाधिकगुणान् स्वभक्तान्
प्रशशंस । अथ श्रीवल्लभः श्रीधरस्वामिप्रणीतायाः व्याख्यायाः
प्रतिकूलां कांचित् स्वकृतां भागवतव्याख्यां प्रभुवरं
श्रावयितुमियेष । प्रभुणापि तदा स्वामिमतप्रतिकूल-
वर्तिनीं व्याख्यां वेश्यात्वेनानादृत्य यशोदानन्दनः श्रीम-
च्छ्यामसुन्दर एव कृष्णशब्दार्थत्वेन सप्रमाणविस्तरं प्रति-

पादयामास । पश्चाच्च प्रसादसुमुखस्तन्निमन्त्रणमङ्गीकृत्य श्रीमद्गदाधरान्मन्त्रार्थमवगन्तुं तमादिदेश ॥

कदाचिन्महाराजप्रतापरुद्रस्य ज्येष्ठनन्दनः श्रीभवानन्दनन्दनं पट्टनायकं गोपीनाथं राजस्वविनाशनागसा प्रचण्डं दण्डयितुमियेष । तदा तद्रक्षणार्थं सर्वैरात्मजनैरनुरुद्धः श्रीगौरसुन्दरः संन्यासिनां तादृग्लौकिकविषयप्रसंगः सुतरामेव परिहार्य इति लोकशिक्षार्थमादौ तत्र वैमुख्यं प्रकाश्य पश्चात्तमुद्धार्य नरपतिविषये कर्तव्यं शुक्लवित्तेन देहयात्रादिकं चोपदिदेश ॥

एकदा कीर्तनविरामात् परमवसिताभ्यवहारविधिः श्रीमन्माहाप्रभुर्गम्भीराद्वारमाधित्याशयिष्ट । तदा परिचर्यार्थं गम्भीरान्तः प्रविविक्षुरनन्यगतिर्गोविन्दस्तदुपरि स्वकीयं बहिर्वसनं विन्यस्य तदुल्लङ्घनेन समीपमागत्य पदसंवाहनमारेभे । स्वभोजनार्थं पुनः प्रभुमुल्लङ्घ्य बहिर्गमनमनुचितमिति धियासौ निराहार एव सेवमानः स्वप्नलीलावसाने प्रभुणा तत्कारणं पृष्टः केवलमपराधभयमेवानुल्लङ्घनकारणत्वेनावादीत् प्रभोर्विश्रामकालगतां स्वकृतां सेवां

कथमपि नोवाच । तदानीं प्रभुरेतेन गोविन्दचरितेन निष्कपटसेवादर्शमदर्शयत् । अनन्तरं च नामाचार्यवरे निखिलार्यनिकरवरेण्ये ठक्कुरहरिदासे नामकीर्तनपुरःसरं स्वीकृतनिर्याणलीले प्रभुवरः स्वक्रोडे तदीयमप्राकृतकलेबरमादाय भक्तगणैः कीर्तननर्तनक्रमेण पारावारपारमार ॥

ततश्च सिन्धुसलिलेन तदभिषेकमाचर्य भक्तांस्तत्पादोदकं पाययित्वा स्वयं समाधिस्थं विधाय तत्र समाधिपीठं विदधे । पश्चाच्च सिंहद्वारवर्तिनो विपणिकारगणात् प्रसादभिक्षां संगृह्य तेन महाडम्बरं विरहमहामहोत्सवं चकार । कदाचित् पण्डितवरः श्रीमज्जगदानन्दः प्रभोरभ्यङ्गार्थं श्रीशिवानन्दभवनाच्चन्दनादिसुवासितं कलशसंभृतं तैलमतिप्रयासेनानीय ददौ । प्रभुस्तु संन्यासिनां तैलाभ्यङ्गविधानमसंगतमित्युक्त्वा तेन श्रीजगन्नाथमन्दिरे प्रदीपविधानमाादिदेश । तेन च प्रणयाभिमानरोषभरेण पण्डितवरेण प्रभुवरस्य पुरत एव तैलभाण्डं विनाश्य रुद्धद्वारे निजागारे निराहारेण

शयनं स्वीचक्रे । एवं तृतीयदिवसागमे भक्तप्रेमवशः स्वयमेव भक्तमानभञ्जनार्थं तद्गृहमागत्य पण्डितेन पाकं साधयित्वा भिक्षां जग्राह । तं च प्रसादान्नं ग्राहयामास ॥

कदलीवल्कलशायिनः प्रभुवरस्य देहपीडां संभाव्य श्रीजगदानन्दस्तूलककम्बलोपधानादीनि साधयामास । परं तु साधकानामवधानं जनयता प्रभुणा तानि नाङ्गीचक्रिरे । पश्चात् श्रीस्वरूपगोस्वामिना कदलीवल्कलैरेव साधितानि तानि भक्तानामत्याग्रहेण जग्राह । कदाचिद्देवदासीगणमुखाद्गीतगोविन्दसंगीतमाकर्ण्य विलुप्तकल्पबहिर्दर्शः प्रेमावेशवशः कण्टककाननमुल्लङ्घ्य तद्दिशं धावन् श्रीमहाप्रभुर्गोविन्देन स्त्रीजनसंगीतमिदमिति विज्ञाप्य निवारितस्तं साधुवादैर्युयोज । श्रीमद्रघुनाथभट्टः काशीक्षेत्रादागमनकाले रामदासविश्वासाभिधानं रामानन्दाम्नायभाजनं कंचन पण्डितजनं सहचरं कृत्वा पुरुषोत्तमपदे प्रभुपदमानिनाय । प्रभुस्तु बहिर्दैन्यवैष्णवसेवाभिनयशालिनमप्यन्तर्मुमुक्षापाण्डित्यगर्वविलासिनं तमौदासीन्यमदर्शयत् ।

श्रीमद्रघुनाथभट्टं तु गार्हस्थ्याश्रमस्वीकारान्निवार्य वैष्णवसेवार्थं पुनर्वाराणसीं प्रापयामास ॥

एकदा च महति जनसंमर्दे श्रीमद्गौरसुन्दरो गरुडस्तम्भसमीपे दण्डायमानः श्रीमज्जगन्नाथदेवं पश्यन्नासीत् । तदा देवदर्शनेऽन्यथालब्धानवसरा काचिद्वर्षीयसी रमणी तत्स्कन्धमारूढा महानुरागेण भगवद्विग्रहं द्रष्टुमारेभे । पश्चात्तां तथा दृष्ट्वा गोविन्दे निवारयति प्रभुस्तस्या आर्तिं प्रशस्य महान्तं प्रेमाणमदर्शयत् ॥

अन्येद्युर्द्वारत्रयमवरुद्ध्य श्रीमन्महाप्रभुर्गृहान्तःप्रकोष्ठे शयनलीलां चकार । कियत्कालानन्तरं रुद्धकवाटेऽपि भवने तमपश्यन्तौ गोविन्दस्वरूपौ भक्तगणैः साकमन्विष्य सिंहद्वारादुत्तरतः शिथिलदेहसन्धिबन्धनमतिदीर्घकलेबरमचेतनं ददृशतुः । ततश्च भक्ताः निरन्तरं कृष्णनामसंकीर्तनेन संज्ञां प्रापय्य तं गृहमानिन्युः । अन्यदा च गोवर्धनभ्रान्त्या चटकगिरिमभिधावन्तं स्तम्भरोमोद्गमादिभिर्विलसन्तं महाभावविलासयुक्तं प्रभुवरमुच्चैर्नामकीर्तनादिभिर्बहिर्दशामापाद्य भवनमानयामासुः ॥

महाभावावेशसमये श्रीमद्गौरसुन्दरः कदाचिद्वा स्वरूपरामानन्दयोः कण्ठग्रहणेन विलापमकुर्वत । कदाचिद्वा वृन्दावनभ्रान्त्या कुसुमकाननं प्रविश्य तरुलतागुल्ममृगादीन् श्रीनन्दनन्दनवृत्तं पप्रच्छ ॥

श्रीमच्छिवानन्दनन्दनः सप्तमवर्षवयस्येव प्रभुचरण-मुपेत्य हरिनाममहामन्त्रस्वीकारानन्तरमप्राकृतकवित्वविला-समदर्शयत् । कदाचिद्विविधप्रेमोन्मादवशेन प्रभुणा द्वारम-नुद्घाट्य प्राचीरत्रितयमुल्लङ्घ्य धेनुगणमध्ये वहिर्निपत्य कमठा-कारेणावतस्थे । अन्यदा द्विजराजकिरणराजिविराजितायां निशायां कालिन्दीभ्रान्त्या नीलाम्बुनिधौ निपतितं विसञ्ज्ञं प्रभुवरं मत्स्यज्ञानेन जालबन्धनेन तीरं प्रापय्य कश्चिद्धीवरस्तत्स्पर्शेन प्रेमाविष्टो बभूव ॥

अथात्मानं भूताविष्टं मत्वा भूतापसारकं वैद्य-मन्वेष्टुं गच्छतो धीवरादितस्ततः प्रभुपदमन्विष्यन्तः श्रीस्वरूपगोस्वामिप्रमुखाः भक्तवराः वृत्तमाकर्ण्य तत् क्षेत्रं समागता उच्चैर्नामकीर्तनेन वहिर्दशां प्रापय्य गृहं प्रापयामासुः ॥

अथैकदा श्रीमज्जगदानन्दहस्तेन श्रीमदद्वैताचार्यः श्रीनवद्वीपात् प्रहेलिकावचनात्मकं पत्रमेकं प्रभवे प्रेरयामास । तत्पाठेन च तस्य विप्रलम्भलीलाविलास-मत्यर्थमवर्धत । तेनान्तरङ्गैर्भक्तैः प्रभोरप्रकटलीलाया अचिरभावित्वमनुमेने । एकदा तु विप्रलम्भोन्मत्तेन प्रभुणा गम्भीराभित्तौ निशायां वदनमघृष्यत । अन्यदा च जगन्नाथवल्लभोद्याने महाभावावेशेन दशविधाश्चित्रजल्पोक्तयः प्रकटयांचक्रिरे । एवं कदाचिद्वा सदैन्योत्कण्ठविलासं स्वप्रणीतशिक्षाष्टकभाषितानि समास्वाद्य श्रीस्वरूपरामानन्दाभ्यां रात्रिरनीयत । कदाचिद्वा श्री-गीतगोविन्दश्रीकर्णामृतश्रीजगन्नाथवल्लभश्रीमद्भागवतादीनां वचनान्याकर्ण्य विप्रलम्भमहाभावसागरस्य नवनवायमान-मुद्वेलनमजायत ॥

एवं गौडे नभसि जगतामीश्वरो गौरचन्द्र
आविर्भूतः स्वभजनसुधां सर्वलोकेषु वर्षन् ।
वर्षान्नीत्वा वसुयुगमिता न्नित्यनूत्नैर्विलासै-
रन्तर्धानं नृनयनगतां नित्यमूर्तिं निनाय ॥

तत्र लीलासंक्षेपोक्तिः—

बालोचितै श्चातिचलस्वभावै-
विद्याविलासैश्च गृहस्थधर्मैः ।
वर्षांश्चतुर्विंशतिमत्र पुण्ये
मायापुरे गौरहरिर्निनाय ॥ १ ॥

श्रीकृष्णचैतन्यसमाख्यासौ
गृहीतसंन्यासविधिः परेशः ।
भक्तिं परां भारतवर्षकेऽस्मिन्
प्रचारयामास च वर्षषट्कम् ॥ २ ॥

आचार्यलीलाभिनयं यतीन्द्र-
वर्यः समाचर्य सदाऽर्यमान्यः ।
भक्तैः समं श्रीपुरुषोत्तमस्य
क्षेत्रे समाः षड्गमयांचकार ॥ ३ ॥

निरन्तरं कृष्णरसामृतं स
रहः समास्वाद्य निजान्तरङ्गैः ।

तत्रैव शेषाः शरदो निनाय
यमेन्दुमिता जगातामधीशः ॥ ४ ॥

अनन्तलीलालहरीविलासं
प्रेमामृताब्धिं गुणरत्नवासम् ।
अशेषतो वर्णयितुं न शेष-
ब्रह्मेशभाषादय ईशतेऽत्र ॥ ५ ॥

समासतस्तदत्रोक्तं महाजनानुसारतः ।
प्रभोः श्रीचरितं पुण्यं प्रीतयेऽस्तु सतां सदा ॥ ६ ॥





THE M.L.J. PRESS, MYLAPORE, MADRAS.